म्बनो विचार इति चेत्, न; अध्यापनविधिशेषतया आ यस्य स्वार्थविवक्षायोगात्। अध्यापनाङ्गत्वमाम्नायस्य न संभवति, विनियोजकाभावादिति चेत्, न; प्रयुक्तिकृतशेषत्वस्य[3] अनिवार्यत्वात्। अध्ययनं तावदध्यापनविधिप्रयुक्तानुष्ठानत्वात् तच्छेषतामश्नुते; तच्चाध्ययन च्चारणरूपमुच्चार्यमाणस्वाध्यायनिष्पाद्यम्; अतोऽध्ययनस्य प्रयोजकोऽध्यापनविधिः तदुपकारिणमाम्नायमपि प्रयुङ्क्ते; प्रयुक्तौ चाङ्गत्वान्न विवक्षितार्थत्वम्। अथ मन्यसे—न प्रयुक्तिमात्रादङ्गत्वम्, अनङ्गस्याप्युपकारस्य प्रयुक्तिसंभवात्, अतो विषनिर्हरणादिमन्त्रवाक्यवदविवक्षितार्थत्वं नास्ति इति, तर्हि प्रकारान्तरेणाविवक्षितार्थत्वं संपादयामः। स्वाध्यायविधिवाक्ये तव्यप्रत्ययेनापूर्वस्य प्रतिपादनात्तदङ्गता तावत्स्वाध्यायस्याधिगता। यद्यप्यध्यापनविधिप्रयोज्यमध्ययनस्याध्यापनाङ्गत्वमपि प्राप्तम्, क्रतुप्रयुक्तस्य प्रयाजादेः क्रत्वङ्गत्वदर्शनात्, तथापि प्रथमावगतमपूर्वाङ्गत्वं नापाकर्तुं शक्यम्। ततश्चापूर्वाङ्गस्य स्वाध्यायस्याविवक्षितार्थत्वान्न वेदार्थविचारः कर्तव्यः। इति पूर्वपक्षे प्राप्ते राद्धान्तं ब्रूमः। न तावत्प्रयुक्तिबलादध्यापनाङ्गत्वमध्ययनस्य युज्यते; उत्तरक्रतुप्रयुक्तस्याधानस्य तदङ्गत्वादर्शनात्[6]; प्रयाजादीनां विनियोजकप्रकरणादिप्रमाणबलादङ्गत्वसिद्धेः; इह च तादृशप्रमाणाभावात्। अपूर्वार्थत्वं त्वध्ययनस्य नार्थविवक्षाप्रतिबन्धकम्; अपूर्वस्य स्वाध्यायगततव्यप्रत्ययाभिहितत्वेन प्रयोजनाकाङ्क्षायां दृष्टे सत्यदृष्टकल्पनानुपपत्त्या स्वाध्यायसामर्थ्यजन्यं प्रयोजनवद्विज्ञानं फलमिति ल्पयितुं शक्यत्वात्। तस्माद्विवक्षितार्थस्य वेदस्यार्थविचारः कर्तव्य इति स्थितम्। एवं च वेदार्थविचारं प्रतिजानतां प्राभाकराणां मते वेदान्तानामगतार्थत्वं दुःसंपादमिति।

---

१. P, T, V : अध यन
२. P, T, V : अध्ययनाङ्गत्वम्
३. T, V : प्रयुक्तिशेषत्वस्य
४. Ś : योज्याध्ययनस्य
५. P omits from this word up to उत्तर तु in the next sentence but one.
६. P reads ; युक्तस्याप्य दङ्गत्वादर्शनात्
७. C, Ś : कृत्स्नवेदार्थ

XXXVI. अत्रोच्यते । यद्यपि कृत्स्नवेदाध्ययनविधि-युक्तो विचारो वेदार्थमेव विषयीकुर्यात्, तथापि अनन्यथासिद्धेन सूत्रगतधर्मग्रहणेन वेदार्थैकदेशविषयः संपद्यते । न चैवमध्ययनविधि-विरोधः; सामान्यरूपस्य विधेः प्रतिवाक्याध्ययनं प्रतिवाक्यविचारं च व्यापारभेदेन वेदार्थैं देशविचारेऽपि चरितार्थत्वात्; यथा 'चक्षुषा रूपं पश्येत्' इति विधेः नीलरूपदर्शनमात्रेणापि चरितार्थता तद्वत् । अथ तत्र सर्वरूपदर्शनस्याशक्यत्वात्सङ्कोचः, तर्ह्यत्रापि अविरक्तेनानधि-कारिणा वेदान्तानां विचारयितुमशक्यत्वादेव सङ्कोचोऽस्तु । न चैवमध्य-यनेऽपि सङ्कोचप्रसङ्गः; तत्र विरक्तेरधिकारं प्रत्यप्रयोजकत्वात् । विचारस्य चासङ्कोचे धर्मग्रहणमनुपपन्नं स्यात्, वेदार्थविचार इत्येव वक्तव्यत्वात् । पुरुषार्थत्वद्योतनाय वेदार्थ एव धर्मशब्देन निर्दिश्यत इति चेत्, न; धर्म-शब्दस्य वेदार्थवाचकत्वाभावात्, अवेदार्थे चैत्यवन्दनादावपि कैश्चिद्धर्म-शब्दप्रयोगात् । अथान्वयव्यतिरेकसिद्धश्रेयःसाधनाभिधायी धर्मशब्दो वेदार्थश्च श्रेयःसाधनमिति तत्र धर्मशब्दो वर्तत इति मन्यसे, तर्हि श्रेयो-रूपं ब्र न धर्मशब्देनाभिधीयते, स धनत्वाभावात् । तत ए देश-विचारोऽङ्गी र्यः । नो चेत्, ब्र णोऽपि संग्रहाय सूत्रे वेदार्थपदं वक्तव्यम् । न च सामन्यतोऽप्रतिपन्नस्य ब्र णः कथं सङ्ग्रह इति वाच्यम्; साङ्गवेदाध्यायिनो विचारात्प्राग् धर्मवद् ब्रह्मणोऽप्यापाततः तिपत्तेः सत्त्वात् । ततश्च वेदार्थपदाभावादादिसूत्रं धर्ममात्रविचार-विषयम् ।

XXXVII. तथ लक्षणपरं द्वितीयसूत्रमपि धर्मविषयम्, न वेदार्थविषयम् । लक्षणं हि लक्ष्यस्यान्यत्र प्रसङ्गभ्रमनिरासपरम् । तत्र धर्मस्य लक्ष्यत्वे चैत्यवन्दनादौ प्रसङ्गभ्रमो निरस्यते, कैश्चिच्चैत्यवन्द-नादिषु धर्मत्वभ्रमं प्य विप्रतिपद्यमानत्वात् । ननु वेदार्थेऽपि विप्र-तिपत्तयः सन्ति किमर्थवादादिलक्षणो वेदार्थः, किं वा चोदना-

---

१. P omits all the words from this up to in the next sentence but one.

लक्षणः इति; ततस्तन्निरासाय [1]लक्षणमुच्यताम्; इति चेत्, तर्हि 'चोदनालक्षणो वेदार्थः' इति सूत्रे लक्षणं वक्तव्यम्; धर्मग्रहणे हि वेदार्थविप्रतिपत्तिनिरासोऽशाब्दः स्यात्। वेदार्थमेव विवक्षित्वा धर्मशब्दः प्रयुक्त इति चेत्, न; तस्य तदवाचकत्वात्। न च धर्मशब्दो वेदार्थं लक्षयति, जहल्लक्षणायां वेदार्थस्याधर्मत्वप्रसङ्गात्; अभिधेयादन्यस्य तीरादेर्लक्ष्यस्यागङ्गात्वदर्शनात्। अजहल्लक्षणायामपि कीदृशी वचनव्यक्तिः? यश्चोदनालक्षणः स धर्म इति, यो धर्मः स चोदनालक्षण इति वा? द्वेधापि न वेदार्थविवक्षा सिध्यति, चोदनाधर्मशब्दयोर्वेदतदर्थैकदेशवाचिनोः कृत्स्नवेदतदर्थलक्ष[2]कत्वे कारणाभावात्। न हि यच्चाक्षुषं तद्रूपम्, यद्रूपं तच्चाक्षुषम्, इत्यत्र सर्वप्रत्यक्षतद्विषयलक्षणा दृष्टा। मुख्यार्थेऽनुपपत्त्यभाव उभयत्रापि समानः।

XXXVIII. अथोच्येत

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥[3]

इत्यादिवत्संज्ञाविधिपरमिदं सूत्रम्, ततो न धर्मशब्दस्य पूर्वमभिधा[4]लक्षणावृत्त्योरभावेऽपि वेदार्थविवक्षा भवति[5]–इति। तन्न, प्रयोजनाभावात्। यथा 'आचार्याय गां दद्यात्' इत्यादिकार्यान्तरे नियोगार्थमाचार्यसंज्ञा विधीयते, न तथेह कार्यान्तरमस्ति, यदर्थं वेदार्थस्य धर्मसंज्ञा विधीयते। धर्मशब्दस्य वेदार्थवाचकत्वाङ्गीकारेऽपि सूत्रगतार्थशब्दवैयर्थ्यम्, चोदनाशब्दस्य कृत्स्नवेदलक्षणापरत्वम्, अधिकरणरचनानुपपत्तिश्च त्वन्मते वारयितुं न शक्यन्ते[6]। न च 'श्येनेनाभिचरन्यजेत'[7] इत्यादयोऽर्थशब्दव्यावर्त्याः; तेषामपि वेदार्थत्वे[8] व्यावृत्त्ययोगात्;

१. C inserts इदं
२. Ś : लक्षणत्वे
३. Manu, II-140
४. C, T, V : अभिधान
५. C, Ś : भविष्यतीति
६. P, T, V : शक्यते
७. Āp. ŚS, XXII-iv-13
८. P, T, V : वेदार्थत्व-

अवेदार्थत्वे च धर्मशब्देनैव व्यावृत्तिसिद्धेः। सिद्धामेव व्यावृत्तिमर्थशब्दोऽनुवदतीति चेत्, न; तथा सति वैयर्थ्यतादवस्थ्यात्। वेदार्थैकदेशभूतधर्मविचारपक्षे तु श्येनादेः प्रतिषेधचोदनालक्षणस्यानर्थत्वेनाधर्मत्वसिद्धिरर्थशब्दप्रयोजनं भविष्यति। अर्थशब्दवैयर्थ्येऽपि चोदनाशब्दस्य लक्षणापरत्वं कथम्? इति चेत्, उच्यते। किं चोदनातिरिक्तोऽपि कश्चिद्वेदभागोऽस्ति, उत न? यदि नास्ति, तदा 'चोदनालक्षणोऽर्थश्चोदनार्थः' इति सूत्रार्थः स्यात्; ततो लक्ष्यलक्षणयोरैक्यमापद्येत। अस्ति चेत्, सोऽपि वेदभागोऽर्थवान्, न[1] वा? अर्थवांश्चेत्, कथं चोदनाप्रमेयोऽचोदनाभागस्यार्थः स्यात्? अर्थशून्यत्वेऽपि चोदनार्थः कथं सार्थकनिरर्थकभागद्वयसमुदायवेदार्थः स्यात्? तस्माच्चोदनाशब्दस्य कृत्स्नवेदलक्षकत्वं त्वया दुर्वारम्। अधिकरणं चैवं त्वया रचनीयम् किं वेदार्थश्चोदनालक्षणः, किं वार्थवादादिलक्षण इति विशये सति नार्थवादादिलक्षणः, किं तु चोदनालक्षणः इति। सेयं रचना अनुपपन्ना; वेदस्य प्रामाण्यप्रतिपादनात्प्रागर्थवत्त्वस्यैवानिश्चयात्। प्रथमसूत्रेऽध्ययनविधिप्रयुक्ताप्रामाण्यनिराकरणेऽपि पौरुषेयत्वादिप्रयुक्ताप्रामाण्यमनिराकृतम्; अन्यथोत्तरसूत्रसन्दर्भस्य प्रामाण्यप्रतिपादकस्य वैयर्थ्यापातात्। न च दृढीकरणाय पुनः प्रतिपादनमिति वाच्यम्; अदार्ढ्यशङ्काया अभावात्। वेदप्रामाण्यस्यापि वेदार्थान्तःपातित्वात्सूत्रसन्दर्भेण प्रतिपादनमिति चेत्, न; तथा सति प्रामाण्यस्य सिद्धरूपतया वेदस्य कार्यैकनिष्ठत्वहानिप्रसङ्गात्। तर्हि प्रथमसूत्रमेव प्रामाण्यं साधयति, नान्यः सूत्रसन्दर्भः; इति चेत्, न, भाष्यविरोधात्। भाष्यकारो हि द्वितीयाध्यायमारभमाणो 'वृत्तं प्रमाणलक्षणम्[2]' इत्यनुवदन्[3], प्रथमाध्यायेन वेदस्य प्रामाण्यमेव साधितं दर्शयति किं च[4] चोदनालक्षणो वेदार्थो नार्थवादादिलक्षणः इति। अयमेव यद्यस्य सूत्रस्यार्थः, तदार्थवादमन्त्राधिकरणानारंभः प्रसज्येत; अस्मिन्नेव सूत्रे मन्त्रार्थवादयोर्धर्मप्रमापकत्वनिराकरणात्।

१. P, Ś : निरर्थ ो वा
२. Bhāṣya on PM, II-i-1
३. P : अनुवादेन
४. T, V omit च

स्वकत्वादिना [1]अन्यप्रकारप्रतिपादनार्थस्तदधिकरणारंभ इति चेत्, न; अत्रैव धर्मप्रमापकत्वे[2]निराकरणे तत्र धर्मप्रतिपादकत्वलक्षणपूर्वपक्षानुदयात्। तदेवं प्रथमद्वितीयसूत्रपर्यालोचनया कार्यनिष्ठो वेदभागो विचार्यतया प्रक्रान्तः, विचारितश्च; न वस्तुतत्त्वनिष्ठः। तस्मादगतार्थत्वाद्वस्तुतत्त्वनिष्ठं वेदभागं विचारयितुमुत्तरमीमांसा आरब्धव्येति सिद्धम्।

इति द्वितीय र्ण म्

---

1. P, Ś : अन्वय ति ादन
2. C : तिपाद त्व

# तृतीयवर्णकम्

एवं सूत्रस्य तात्पर्याच्छास्त्रारंभो निरूपितः ।
वर्णकद्वितयेनाथ पदव्याख्या निरूप्यते ॥ १ ॥

तात्पर्ये निश्चिते पूर्वं तत्र योजयितुं पदम् ।
सुशकं[1] तेन तात्पर्यं कथितं वर्णकद्वये ॥ २ ॥

तृतीये वर्णके सूत्रपदव्य ख्यामुखेन तम् ।
शास्त्र रंभं दृढीकर्तुं पदार्थोऽत्र विचार्यते ॥ ३ ॥

I. अथशब्दस्य चत्वारोऽर्था वृद्धव्यवहारे प्रयोगसामर्थ्यात् प्रसिद्धाः, आनन्तर्यम्, अधिकारः, मङ्गलाचरणम्, प्रकृतादर्थादर्थान्तरत्वं च । तत्रेतरपर्युदासेनानन्तर्यमथशब्देनोपादीयते । तच्च जिज्ञासापदस्यावयवार्थस्वीकारे[2] लभ्यते । तत्राधिकारो नाम प्रारंभः । न हि ब्रह्मज्ञानेच्छा कर्तव्यतया प्रतिपाद्यतया वा आरब्धुं[3] शक्या; इच्छाया विषयसौन्दर्यमात्रजन्यत्वात्; प्रत्यधिकरणमप्रतिपाद्यमानत्वाच्च ।

II. ननु जिज्ञासाशब्दो विचारे रूढः, भाष्यकारादिभिस्तत्र विचारविवक्षया प्रयुक्तत्वात्; अतो 'रूढिर्योगमपहरति' इति न्यायेन अवयवार्थस्वी रो न युक्तः; ततोऽथशब्दोऽप्यधिकारार्थो भविष्यतीति[4] विचारस्य प्रारब्धुं शक्यत्वात्; इति चेत्, मैवम्; 'रूढिर्योगमपहरति' इति न्यायस्यात्राप्रसरात् । तथा हि । द्विविधा तावच्छब्दवृत्तिः[5], ख्यामुख्यभेदात् । तत्र रूढिर्योगश्चेति द्वयं मुख्यम्, लक्षणा गौणत्तिश्चे ति द्वयम ख्यम् । अवयवार्थमनपेक्ष्य वृद्धप्रयोगमात्रेण व्युत्पाद्याना अश्वगजा दिशब्दा रूढाः । अवयवार्थद्वारा विशिष्टार्थाभिधायिनश्चतुराननकमलासनादिशब्दा यौगिकाः ।

---

१. Ś : सुश :
२. C, Ś : स्वी रात्
३. C : प्रारब्धुं
४. P omits इति
५. P : वृत्तिः

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता[1] ॥

इत्युक्तत्वात्, अभिधेयाविनाभूततीरप्रत्यायको गङ्गा-शब्दो लाक्षणिकः; शौर्यादियोगाद्देवदत्ते प्रयुज्यमानः सिंह-शब्दो गौणः। न च पङ्क-जादिशब्देषु योगरूढ्याख्या पञ्चमी शब्दवृत्तिरस्तीति शङ्कनीयम्; तत्र रूढिकल्पने प्रयोजनाभावात्, तामरसे व्यवहारबाहुल्यादप्युत्पलादि-व्यावृत्तिसिद्धेः; दृश्यते ह्यनेकार्थस्यापि गो-शब्दस्य प्रयोगबाहुल्यात्स-स्नादिमद्व्यक्तौ [2]प्रथमप्रतिपत्तिः। ततश्चतस्र एव शब्दवृत्तयः। तत्र यः शब्द एकत्रार्थे रूढः, अपरत्र यौगिकः यथा छागे रूढोऽजशब्द आत्मनि यौगिकः तत्र 'अजं पश्य' इत्युक्ते 'रूढिर्योगमपहरति' इति न्यायः प्रसरति। इह तु जिज्ञासाशब्दो न विचारे रूढः; ज्ञानेच्छालक्ष-णाद्यौगिकार्थाद्विचारस्यात्यन्तपार्थक्याभावात्। न हि ज्ञानेच्छा जिज्ञासा-शब्दार्थः, किं तु विचारसाध्यज्ञानविषयेच्छा। ज्ञानं खल्विष्य-माणं विषयेण सहावगतमिष्यते; अनवगते विषये इच्छायोगात्। ततश्च प्रतिपन्ने वस्तुनि ज्ञानमिष्यमाणं सन्दिग्धे निश्चयफलं[3] परोक्षेऽपरोक्षफलं वेष्यते। तच्चोभयं प्रमाणादिविचारप्रयत्नसाध्यमिति प्रतिपन्ने वस्तुनि विशिष्टज्ञानमिष्यमाणमविनाभावेन प्रमाणादिविचारं गमयति। ततो भाष्यकारादिभिर्जिज्ञासाशब्दो लक्षणया विचारे प्रयुक्तो न तु[4] रू च, येनोक्तन्यायः प्रसरेत्।

III. ननु शब्दत इच्छायाः प्राधान्येऽपि, नेच्छामात्रं सूत्रेण प्रतिपाद्यते, प्रयोजनाभावात्; किं त्विष्यमाणज्ञानप्रदर्शन खेन तत्साधनं विचारमन्तर्णीतश्रुतिमु[5]पलक्ष्य स एव तात्पर्येण प्रतिपाद्यते; अतोऽर्थतः प्रधानानां विचारज्ञानब्रह्मणामन्यतमस्य तात्पर्येण प्रतिपाद्यस्यारंभाय अथ-शब्दः; इति चेत्, मैवम्। तथा सति अथ-शब्देनानन्तर्याभिधान-

१. Tantravārtika, I-iv-22
२. C : प्रथमं
३. P, Ś insert वा
४. P omits
५. C, P, Ś omit ुर्ति

मुखेन शास्त्रीयसाधनचतु यसंपन्नस्याधिकारिविशेषस्य न्यायतः समर्पणाभावात्कर्तव्यतया विधीयमानो विचारो निरधिकारोऽननुष्ठेयः स्य त् । न च विचारविधिरेव [1]विश्वजिन्न्यायेनाधिकारिविशेषं कल्पयित्व त्तिपर्यन्तो भविष्यति, ि मानन्तर्यार्थेनाथशब्देन ? इति वाच्यम् । कर्तव्यतयावगतो विचारः प्रारंभमर्थाद्गमयति, किं विचारप्रारंभार्थेनाथशब्देनेत्यपि सुवचत्वात् । तर्हि विधिसामर्थ्यादुभयप्रा ौ कस्तव निर्णय इति चेत्, विध्यपेक्षितोपाधित्वादानन्तर्याभिधानमुखेनाधिकारिसमर्पणमेव युक्तमिति ूमः । यदि अथ-शब्देन विशिष्टाधिकारिणं मुखतोऽसमर्प्य विश्वजिन्न्यायेन तं कल्पयसि, तदा विचारविध्यन्यथानुपपत्त्य सामान्यत [2]वर्णिकाधिकारं प्रसक्तं कृत्वा पुनस्तन्निषेधेन मोक्षकामाधिकारः कल्पनीय इति गौरवं स्यात् । ततो वरमथशब्देनैव विशिष्टाधिारिसमर्पणम् ।

IV. ननु विधिप्रतिपत्तिविशिष्टाधिकारि तिपत्त्योः कालभेदे सत्युक्तदोषो भवति; नेह लभेदः; किं तु रात्रिसत्रन्यायेनार्थवादगतं मोक्षं ब्रह्मज्ञानं वा फलत्वेन परिणमय्य मोक्षकामो ब्रह्मज्ञानकामो वा विचारयेदिति विधि तिपत्तिसमयेऽधि ारिविशिष्टविधिः प्रतीयते; ततो न प्रसज्यप्रतिषेधरूपं गौरवम्; इति चेत्, तत्रेदं वक्तव्यम्—विं विशिष्टाधिकारं विचारशास्त्रम्, उत त्रैवर्णिकमात्राधिकारम्?—इति । आद्ये तीतो विधिरुत्सर्गतस्त्रैवर्णिकसम्बन्धी पश्चादर्थवादबलात् त्रैवर्णिकविशेषमोक्षकामसम्बन्धीति कालभेदेन प्रतिपत्तेरुक्तदोषो दुर्वारः । ननु त्वत्पक्षेऽपि विधिबलात् सर्वाधिकारप्रसक्तौ अथ-शब्देन विशिष्टाधिकारिसमर्पणात् प्रसज्य तिषेधो दुर्वारः; इति चेत्, न; श्रवणविधि रणपठितस्यैव साधनचतु यसंपन्नाधिकारिणोऽथ-शब्देन न्यायतः समर्पणात् ।

V. द्वितीयेऽपि किं फलतः र्वाधिकारं शास्त्रम्, विं वा विधितः? नाद्यः; सर्वेषां ब्रह्मज्ञानलक्षणफल र्थित्वाभ वात् न च

---

१. PM, IV-iii-15 २. Ś : त्र

वस्तु[1]सुखसाक्षात्काररूपे ब्रह्मज्ञाने किमित्यर्थित्वाभाव इति वाच्यम् । ब्रह्मज्ञानाद्धि मनसोऽपि वियोगान्निखिलविषयानुषङ्गनिवृत्तिः श्रूयते । सा च सार्वभौमोपक्रमं ब्रह्मलोकावसानमुत्कृष्टो[2]त्कृष्टसुखं श्रूयमाणं सोपायं निवर्तयति । अतो ब्रह्मज्ञानमपुमर्थः[3], उत्कृष्टसुखनिवर्तकत्वात् , व्याध्या[4]दिवत् , इति मन्वानो लोको न ब्रह्मज्ञानमर्थयते, प्रत्युत तस्मादुद्विजते । ब्रह्मज्ञानं पुमर्थः; निरतिशयानन्दहेतुत्वात् , धर्मवत् ; तद्धेतुत्वं च श्रुतिसिद्धम् ; इति चेत् , एवमपि दृष्टानन्दोपायान् विषयान् परित्यज्य श्रुतानन्दसाधने ब्रह्मज्ञाने प्रेक्षा[5] न युक्ता । तदुक्तम्-

[6]अथानन्दः श्रुतः साक्षान्मानेनाविषयीकृतः ।
दृष्टानन्दाभिलाषं स न मन्दीकर्तुमप्यलम् ॥[7]

इति । ननु निखिलविषयानुषङ्गसाध्य आनन्दो ब्रह्मज्ञानादेव सिध्यति इति नित्यतृप्तये विषयपरित्यागेन ब्रह्मज्ञानमपेक्ष्यताम् ; इति चेत् , न; पामराणां विषयविच्छेदे[8]र्दिकायां तृप्तावप्युद्वेगदर्शनात् । तथा च मूर्खा वदन्ति 'अहो कष्टं किमिति सृष्टिरेवं[9] न बभूव यत्सर्वदैव भोक्तुं सामर्थ्यमतृप्तिभोग्यानां चाक्षयः' इति । मोक्षस्तु विषयसुखलेशमपि नार्हतीति[10] तेषामभिमानः । तथा च रागिगीत दाहरन्ति

अपि वृन्दावने र ये[11] सृगालत्वं स इच्छति ।
न तु निर्विषयं मोक्षं कदाचिदपि गौतम ॥

इति ।

VI. नन्वस्तु तर्हि विधितः[12] सर्वाधिकारं शास्त्रमिति द्वितीयः पक्षः । द फलो ह्ययमध्ययनविधिः यावदर्थावबोधं व्याप्रियमाणः

---

१. P, Ś omit वस्तु
२. C, P, T omit one उत्कृ
३. P : अपुरुषार्थः
४. Ś omits आदि
५. Ś : पेक्षा
६. P : अन्यानन्दः; C : अप्या न्दः
. Sambandhavārtika, v.348
८. C, P, Ś : विच्छेदालि यां
९. C : सृष्टिरियं
१०. Ś inserts हि
११. P, T, V : शून्ये
१२. P omits all the words from this up to and inclusive of था in the next sentence but one.

फलनिष्पत्तये विचारमप्यनुष्ठापयति। तथा च ध्ययनविधेस्त्रैवर्णिका-[1] धिकारत्वात् तत्प्रयोज्यस्य[2] विचारस्यापि तथात्वं युक्तम्। यद्यपि न विचारोऽध्ययनविधेर्विषयः, पा मात्रस्यैव धात्वर्थत्वात्, नापि तदुपकारी, विचारमन्तरेणापि पाठनिष्पत्तेः, तथ प्यध्ययनविधेः फलपर्यन्तत्वसिद्धये विचारस्य तद्विधिप्रयोज्यत्वं भविष्यति। यथा 'व्रीहीनवहन्ति'[3] इत्यत्र सकृदवघातमात्रेण विध्युपपत्तावपि तण्डुलनिष्पत्तिलक्षणफलसिध्यर्थमविहितस्य विहितानुपकारस्य प्यवघातपौनःपुन्यस्य विधिप्रयोज्यत्वम्, तद्वत्। तस्मात् विचारसाध्यार्थनिश्चयफलादध्ययनविधेः शास्त्रं सर्वाधि ारं प्रा मिति।

VII. नैतत्स रम्। किमर्थज्ञानमध्ययनस्य द[4]फलमन्वयव्यतिरे सिद्धम्? उत तदुद्देशेन विधानात् शास्त्रीयम्? ि वा विधेः योजनपर्यन्ततासामर्थ्येन लभ्यम्? आद्येऽपि न तावदर्थनिश्चयः[6] अध्ययनफलम्, केवलादध्ययनादावृत्तिसहिताद्वा निश्चयानुदयात्। विचारेण तदुदये विचारस्यैव लं स्यात्, न ध्ययनस्य। यद्यर्थस्यापातदर्शनमध्ययनफलम्, न तदा विचारस्य तत्प्रयोज्यत्वम्, साङ्गवेदाध्ययनादेव तत्सिद्धेः।

VIII. नन्वस तर्हि विधिबलाच्छास्त्रीयमिति द्वितीयः पक्षः। थ हि। 'अध्येतव्यः' इति तव्यप्रत्ययेन स्वव्यापारः शब्दभावना विधिरूपतयाभिधीयते। सा च शब्दभावना अर्थभावनां निष्प दयन्ती फलवदर्थावबोधं पुरुषार्थं भाव्यत्वेन कल्पयति[7]। तत्र भाव्यान्तरलभात्समानपदोपात्तमध्ययनं रणतामापद्यते। यद्यध्ययनमेव भाव्यं

१. P : िधि ारत् ात्
२. T, V : ्योजनस्य
३. Cp. TB, III-ii-5 (6)
४. P transposes ° and अन्व्यतिरेकसिद्धं ; Ś : ° फ ा- न्व तिरे सिद्धं
५. P : विधीयमानत् ात्
६. P : ध्ययनस्य नि यः
Ś : अर्थस्य निश्चयः
७. C inserts अपुरु ार्थे प्रवृत्त्यदर्शनात्
८. P : भाव ान्त रलाभार्थमे दोपात्त - ध्ययनम् ;
Ś : भा ान्त रा ाभात्समा दोपात्तम् ;
T, V : भाव्यान्तरत्वात्

स्यात्, तदा अक्षरावाप्तिः फलमिति मतं त्वदीयमपि न सिध्येत्। ततः करणस्याध्ययनस्य भाव्योऽर्थावबोधो विधिबलात्फलं भविष्यतीति। नैतदप्युपपन्नम्; कर्माभिधायिना तव्यप्रत्ययेन कर्मभूतस्वाध्यायगत-प्राप्तिलक्षणभाव्याभिधाने संभवति भाव्यान्तरकल्पनायोगात्। समान-पदोपात्तमध्ययनं परित्यज्य भिन्नपदोपात्तस्य[1] बहिरङ्गस्य स्वाध्यायस्य प्राप्तेः कथं भाव्यत्वम्? इति चेत्, न; [2]स्वाध्यायस्य कर्माभिधायि-तव्यप्रत्ययार्थत्वेन प्रत्ययार्थभूतभावनां प्रति प्रकृत्यर्थादध्ययनाद-प्यन्तरङ्गत्वात्।

IX (a). नापि तृतीयः; अक्षरग्रहणस्यैवाध्ययनविधिप्रयो-जनत्वात्।

IX (b). नन्वक्षरग्रहणस्य स्वयमपुरुषार्थत्वात्[3], फलवदर्थाव-बोधस्य[4] त्वया विधिप्रयोजनत्वानङ्गीकारात्[5], अन्यस्य च कर्मकारकगत-फलस्याभावात्, सक्तुन्यायेन कर्मप्राधान्यं परित्यज्य स्वाध्यायाध्य-यनेन स्वर्गं भावयेदिति कल्पना प्रसज्येत; ततो वरमर्थावबोधस्य विधिप्रयोजनत्वम्, 'दृष्टे सत्यदृष्टं न कल्प्यम्' इति न्यायात्। संभवति हि साङ्गवेदाध्ययनमात्रादर्थनिश्चयः; अर्थावबोधहेतोर्व्याकरण-स्याप्यङ्गत्वात्। न चैवं विचारशास्त्रवैयर्थ्यम्; [6]अवबुद्धार्थगतविरोध-परिहाराय तदपेक्षणात्। अतः पुरुषार्थभूतफलवदर्थावबोधो विधि-प्रयोजनम्, नाक्षरग्रहणम्।

IX (c). इति चेत्, मैवम्; अर्थावबोधहेतुत्वेनाक्षरग्रहणस्यापि पुरुषार्थत्वात्; फलभूतक्षीरादिहेतूनां गवादीनामपि पुरुषैरर्थ्यमानता-दर्शनात्। विधेरक्षरग्रहणमात्रोपक्षयेऽर्थज्ञानमाकस्मिकं स्यादिति चेत्, न; अर्थावबोधस्य फलप्रयुक्तत्वात्। न हि विधिप्रयुक्तोऽर्थाव-बोधः; लौकिकाप्तवाक्यानां विधिमन्तरेण फलवदर्थावबोधकत्वदर्शनात्। न चाध्ययनादक्षरग्रहणस्य विशेषाभावात्कथं तयोर्हेतुफलभाव इति

---

१. C, Ś : भिन्नपदोपात्त या
२. C inserts समानपदे
३. P, V : पुरुषार्थत्वात्फलं
४. P, V : द विबोधस्य
५. T : अङ्गी रात्
६. C : वैयर्थ्यमेवबुद्धा° etc.

वाच्यम्; अक्षरावाप्तिर्नाम स्वाधीनोच्चारणयोग्यत्वाख्योऽक्षरधर्मः; अध्ययनं तु तदर्थो वाङ्मानसव्यापारः; इति विशेषसद्भावात्। एवं च[1] तर्ह्यध्ययनस्याक्षरग्रहणहेतुत्वमन्वयव्यतिरेकसिद्धमिति व्यर्थो विधिरिति चेत्, न; अवघातादिवददृष्टोत्पत्तये नियमार्थत्वात्। न चैवं दृष्टफलत्वहानिः; दृष्टफलभूताक्षरप्राप्तिसमवेतस्यैव नियमादृष्टस्याङ्गीकारात्; 'दृष्टे सत्य[2]दृष्टं न कल्प्यम्' इति न्यायस्य स्वतन्त्रादृष्टविषयत्वात्; अथार्थावबोध एव फलमिति वदतापि नियमविधित्वाङ्गीकारात्। न चोपपत्तिसाम्ये सत्यक्षरग्रहणे एव किमिति पक्षपात इति वाच्यम्। अध्ययनविधेः फलवदर्थावबोधः प्रयोजनमिति पक्षे यस्य यस्मिन् कर्मण्यधिकारस्तस्य तद्वाक्याध्ययनमेव स्यात्, न तु वाक्यान्तराध्ययनम्, तत्र प्रत्यादिफलाभावात्; ततो न कृत्स्नवेदाध्ययनसिद्धिः। अस्मत्पक्षे तु कृत्स्नवेदावाप्तिः प्रायश्चित्तजपादावुपयुज्यते।

X. नन्वर्थावबोधमधिकारिविशेषणमुद्दिश्याध्ययनं विधातव्यम्, निरधिकारविधानायोगात्। अक्षरावाप्तिमुद्दिश्य विधानेऽपि तदवाप्तिकाम एवाधिकारी स्यात्; इति चेत्, न; अर्थावबोधोद्देशनपूर्वकशब्दोच्चारणाभावे वाक्यस्य तात्पर्यासिद्धेः; लोकेऽर्थावबोधमुद्दिश्योच्चारिते शब्दे तात्पर्यदर्शनात्। न च लोकवदेव विधिर्मा भूदिति वाच्यम्; तद्वदत्र शब्दोच्चारणप्रयोजकस्य रागस्याभावात्। अथोच्येत विश्वजिन्न्यायेन स्वर्गकामोऽधिकारी कल्प्यताम्; अथ वा वाजसनेयिनां 'ब्रह्मचर्यमागाम्' इत्यादिनोपनयनस्य प्रकृतत्वादुपनीतोऽधिकारीति प्रकरणप्रमाणेन कल्प्यताम्—इति। तदसत्; अर्थावबोधलक्षणदृष्टफललाभेऽधिकारिणि सत्यन्यकल्पनायोगात्। एवं चार्थावबोधकामोऽध्ययनेनार्थावबोधं भावयेदिति विधिः संपद्यते। विचारेणार्थावबोधं भावयेदिति विधिस्त्वार्थिकः; विचारेणापरिहृते विरोधेऽर्थनिश्चयानुदयात्[3] [4]अर्थावबोध एव[5] फलमिति।

---

१. C, Ś omit च

२. Ś: भवति

३. C: उदयात्

४. P inserts तस्मात्

५. Ś omits एव

XI. नैतत्सारम् । तत्र किं विधिबलादक्षरग्रहणमात्रे निष्पन्नमति श्रुतव्याकरणस्य पुरुषस्य[1] लौकिकवाक्यार्थ इव वेदार्थोऽपि स्वतो बुध्यत इति कृत्वा तद्बोधस्य फलत्वमुच्यते ? किं वा अर्थावबोधकाममुद्दिश्य विधानतः? तत्राद्यमङ्गीकुर्मः । द्वितीयोऽनुपपन्नः ; अध्ययनात्प्राग्वेदार्थस्याप्रतिपन्नत्वेन[2] तद्विशिष्टस्यावबोधस्याप्य तिपन्नस्य[3] कामनायोगात् । वेदोऽर्थवान् , वाक्यप्रमाणत्वात् , आप्तवाक्यवत् , इत्यनुमानेन प्रतिपन्नो वेदार्थ इति चेत् , तर्ह्यनुमानसिद्धत्वादेव न वेदार्थज्ञानं काम्येत । सामान्यतोऽनुमितोऽपि वेदार्थो नाग्निहोत्रादिविशेषाकारेण प्रतिपन्नः; इति चेत् , तर्ह्यग्निहोत्रादिगोचरबोधोऽप्यप्रतिपन्नः कथं काम्येत ? पित्राद्युपदेशत एवाग्निहोत्राद्यवगमे कामनावैयर्थ्यं तदवस्थम् । अर्थापदेशिकज्ञानस्याप्रमाणत्वात्तत्र निर्णयज्ञानं का यत इति चेत् , तत्र न तावदप्रामाण्ये निश्चिते निर्णयज्ञानकामना संभवति, अर्थस्य विभ्रममात्रत्वात् ; अप्रामाण्यसन्देहे तु तद्विचारस्यैवावसरः, नाध्ययनस्य । अथ मन्यसे औपदेशिकज्ञानप्रामाण्यविचारायैव वेदाध्ययनं तदर्थविचारश्च; वेदस्य तन्मूलप्रमाणत्वात्[4] इति । एवं तर्ह्यस्तु कथञ्चिदर्थावबोधोऽधिकारिविशेषणम् ; तथापि तदुद्देशेन विधानमयुक्तम् । तत्र किं वेदार्थविशेषज्ञानानां[5] विशेषाकारेणाध्ययनविधेरुद्देश्यत्वम्[6] , उत सामान्याकारेण ? नाद्यः, युगपत्तदसंभवात् । द्वितीयेऽर्थमात्रज्ञानमुद्दिश्योच्चरितस्य शब्दस्य तत्रैव तात्पर्यं[7] स्यात् , नाग्निहोत्रादिविशेषज्ञाने । अथ विधिसामर्थ्यादर्थमात्रे तात्पर्येऽपि वाक्यशक्त्यनुसारेण विशिष्टार्थे तात्पर्यं कल्प्येत, तर्हि विधेस्तत्र तात्पर्यनिमित्तत्वं न स्यात् । किं च कथंचिदुद्दिश्य विधानेऽपि नाध्ययनमात्राद् दृष्टफलतया अर्थावबोधसिद्धिः, अदर्शनात् । ननु वेदस्यार्था[8]वबोधमुद्दिश्यो-

---

१. C, P omit पुरुषस्य
२. Ś : अप्रतिपन्नत्वेन
३. P omits
४. Ś omits प्रमाण ; C omits वेदस्य
५. P : विशेषज्ञानां
६. P adds उत्तम्
७. P omits तात्पर्य
८. P omits अर्थ
Ś : अर्था बोधकत्वं

च्चारणाभावे स्वार्थे तात्पर्यं न स्यात्, तात्पर्यहेतोरभावात्; इति चेत्, मैवम्। न वच श्रोतुरु ारणं तात्पर्यनिमित्तम्, लोके तदभ वात्। नापि वक्तुरु ारणम्, अपौरुषेये वेदे तात्पर्याभावप्रसङ्गात्। नन्वेवमपि वेद-स्यार्थप्रतिपादकत्वं न स्यात्, उद्दिश्योच्चारणस्य प्रतिपादनहेतोरभावात्; ति चेत्, न; शब्दस्य प्रतिपादकत्वस्वाभाव्यात्। तर्ह्यर्थज्ञानमुद्दिश्य शब्दोच्चारणं लोके व्यर्थं स्यात्; इति चेत्, न; पुरुषस बन्धकृतदोष-त्र्यप्रतिबन्धपरिहारार्थत्वात्। ननु वेदस्यार्थप्रतिपादनसामर्थ्येऽपि न बोधकत्वं संभवति, बोधस्य तात्पर्याधीनत्वात्, तात्पर्यस्य[1] पुरुष-धर्मस्यात्रासंभवात्; ति चेत्, मैवम्; तात्पर्यं हि षड्विधलिङ्ग यतया शब्दधर्मो न पुरुषधर्म इति समन्वयसूत्रे वक्ष्यमाणत्वात्। तदेवमध्ययन-विधेर्यावदर्थावबोधफलमव्यापारान्न विधितो विचारशास्त्रस्य सर्वाधि-कारित सिध्यति।

XII. नन्वध्यनविधेरर्थावबोध ामाधि ारं न ङ्गीकरोषि; अधि-कारा रं च न म्; ततोऽनध्ययनमेव प्रसज्येत। अत्र प्राभाकरा आहुः[2] ध्नायनविधिः स्वतन्त्रमधि ारिणमपेक्षते, अध्यापनविधि-प्रयुक्त्य द्विषया नसिद्धेः। न च वाच्यम् 'विधिर्हि सर्वत्र स्वविषयं तदङ्गं वा अनु ापयति; न चाध्ययनमध्यापनविधेर्विषयोऽङ्गं ; ं थं तेनानु प्यते?' इति। अविषयस्या[3]तदङ्गस्याप्याधानस्यो-त्तरकाम्यक्रतुविधिभिरनु ापि त्वात्—इति।

XIII. सोऽयं ाभ रोक्तः परिहारोऽनुपपन्नः। तथा हि। अध्य पनवि धिरप्यश्रूयम णाधि ार एव; 'अष्टवर्षं ब्राह्मण पनयीत, ध्यापयीत' इत्यत्राचार्य रण ाम इत्यश्रवणात्। तत्कथमध्य-यनं तत्प्रयुक्तम्? यदि[4] तत्राधि ारिणं परिकल्प्य तत्प्रयुक्तिरध्ययन-स्योच्येत, त ध्ययने[5] स्वतन्त्रोऽधिकारी कल्प्यताम्, लाघवात्;

१. Ś adds
२. Ś: परि :
३. P, Ś omit दङ्गस्य
४. T, V : यत्
५. C, Ś add अपि

लघीयसी हि स्वविधिप्रयुक्तिरन्यविधि युक्तेः । अथैकत्राधिकारिकल्पन-मात्रेणेतरस्य तत्प्रयुक्तानुष्ठाने संभवत्युभयत्र तत ल्पने[1] गौरव ति मन्यसे, तर्ह्यध्ययन एवाधिकारिणं परिकल्प्य तत युक्तिमन्यस्य किं न[2] ब्रूषे ? यदि लिखितपाठाद[3]प्यध्ययनसिद्धेर्नाध्ययनविधिः विहि -ध्यापनं[4] प्रयोजयति, तर्ह्यविहिताध्ययनेन ाङ्मुखत्वादिरहितेन पि अध्यापनसिद्धेर्न विहितमध्ययनमध्यापनविधिः योजयेत् । अ ोच्येत [5]' प्रयतः प्राङ् खः पवित्रपाणिरधीयीत ' इति ाणवकस्य ाङ् खत्व-ाद्यध्ययनाङ्गं श्रुतम्, तथाध्यापनेऽपि ' ाङ् खं पवित्रपाणिमध्या-पयीत ' इति माणवकस्य प्राङ्मुखत्वादिविशेषणश्रवणाद्विहितमेवाध्ययनं प्रयुज्यते इति, तर्हि

गीती शीघ्री शिरः पी तथा लिखितपा ः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठ ाधमाः ॥

इति लिखितपाठस्य निन्दासद्भावात्, 'आचार्याधीनो वेदमधी ' इत्यध्ययनस्याचार्यपूर्वकत्वनियमविधानाद[6]ध्ययनविधिरध्य[7]पनं किं न प्रयोजयेत् ?

XIV. अथ मतम् 'आचार्याधीनोऽधीष्व ' इत्यत्र चार्य-करणविधिप्रयुक्तोऽधीष्वेति वाक्यार्थः, आचार्यत्वस्याध्यापनादुत्तरकाल-भावित्वात् इति; तदसत्; तत्[9] ' द्वितीयं जन्म तद्यस्मात्स आचार्यः' इत्युपनयनाख्यद्वितीयजन्महेतुत्वमात्रेणाचार्यत्वश्रवणात्[10] ।

आचिनोति हि[11] शास्त्रार्थमाचारे स्थापयत्य पि ।
स्वयमाचरते यस्मादाचार्यः स उदाहृतः ॥

---

१. Ś : ल्पनं
२. T omits न
३. C omits पि
४. T, V, Ś omit विहित
५. C, P insert थाध्ययने;
 Ś : थाध्ययने
६. C, Ś add च
७. C inserts अपि
८. Ś : ६ ात्
९. C omits त्
१०. T, V : ा र्यं वणात्
११. P :
 Ś :

ति स्मृतावाचारे शिष्यान् स्थापयतीति व्युत्पत्तिः प्रतीयते; इति चेत्, एवमप्यध्यापनात्[1]पूर्वमाचार्यत्वमविरुद्धम् । अध्यापनादाचार्यत्वस्योत्तरकालभावित्वे चाचार्यकरणविधिप्रयुक्तोऽधीष्वेति साध्याहारयोजना सज्येत । तस्मादधि ारि ल्पनासाम्यादितरेतरप्रयुक्तिसा याच काम्य[2]विधिप्रयुक्तिसंभवेऽध्ययनस्य थमध्यापनविधिप्रयुक्तिरिति ।

XV. अत्रोच्यते । नाध्यापनविधेरधिकारी कल्पनीयः, श्रुतिस्मृत्योः प्रतीयमानत्वात् । तथ हि । 'अष्टवर्षं ब्रा णमुपनयीत' इति ुतावात्मनेपदेनाचार्य रणसाध्यता प्रतीयते; 'संमाननोत्सञ्जनाचार्यकरणे[3]' इत्यादिना व्या रणसूत्रेणाचार्यकरणे साध्ये तद्विधानात् । न[4] चाचार्यत्वं ि श्चिल्लोके प्रसिद्धमस्ति । ततो यथ 'आहवनीये जुहोति' इत्यत्राहवनीये होमाधारत्वेन विनियुक्ते सति असंस्कृतस्य होमाध रत्वायोगात्संस्कृतस्य संभवाच्च आधानसंस्कृतोऽग्निराहवनीयत्वेन निश्चितः, तथ 'आच र्याय गां दद्यात्' इत्यत्राचार्ये दक्षिणां प्रति सं दानत्वेनावगते सत्यनुपकारिणः संप्रदानत्वायोगादुपकारिणोऽत्र संभवा उपनयननिष्पादनाख्येनोप ारेण माणव[5] त्युपकुर्वत अ चार्यत्वं निश्चीयते । नन्वेवमप्युपनयनसाध्यमाचार्यत्वं भवेत्, नाध्यापनसाध्यम्; इति चेत्, न; उपनयनस्याध्यापनाङ्गत्वात्; 'उपनयीत, मध्यापयीत' इत्ये योगतावगमात् । न च निरपेक्षविधिभेदान्न योगैक्यमिति वाच्यम्; 'उपनीयाध्यापयेत्' इत्येवं प्रयोगैक्यकल्पनात्; तं मिति प्रकृतपरामर्शिन तच्छब्देन कर्मैक्यप्रतीतेः । न चोपनयनस्याध्यापनाङ्गत्वेऽप्यध्ययनस्य न तत्प्रयुक्तिरिति वाच्यम्; माण विषयाध्यापनेनाचार्यत्वं भावयेदिति व क्यार्थस्वीकरणेनाध्यापनक्रि यानिर्वर्तकतय ाणवकस्य क्रियां ति गुणभूतत्वात् उपकारकत्वे वक्तव्ये दृ सत्यदृ ल्पनाया अन्याय्यत्वात् उपगमनाध्ययन[6] भ्या-

---

१. Ś : ध्ययनात्
२. C, Ś : र विधि
३. Pāṇini, I-iii-36
४. C : अथ for न च
५. C : न्ते
६. P : उपनयन

प रोतीति कल्प्यत्वात् । ननूपनयनाध्ययनाभ्यां [1]निष्पाद्यस्याध्यापनस्य यद्यप्याचार्यत्वं फलम्, तथापि श्रुतावधिकारी कल्पनीयः, 'एतत्कामः' इत्यश्रवणात्; इति चेत्, न; कामोपबन्धमात्रस्य कल्प्यत्व त्। ततश्च श्रुतौ 'उपनीयाध्यापयेदाचार्यकरणकामः' इत्येवमध्यापनविधिः साधिकारः संपद्यते। तथा[2] स्मृतावपि

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥[3]

इत्युपनयनाध्यापनयोः प्रयोगैक्यादध्यापने विधिश्रवणादाचार्यत्वफलश्रवणाच्च[4] आचार्यत्वकामो[5] माणवकमुपनीयाध्यापयेदिति निष्पद्यते[6]। अध्ययने तु नाधिकारनिमित्तं किंचिच्छ्रुतमस्तीति विशेषः। न चाध्ययनस्य स्वतन्त्रविध्यन्तरविहितस्य[7] कथं स्वतन्त्रविध्यन्तर युक्त[8]नुष्ठानमिति शङ्कनीयम्; आधानदृष्टान्तेन प्रयुक्तत्वात्। आधाने हि 'ब्र - णोऽ ीनादधीत' इति श्रूयते। तत्र किमाधानं स्वातन्त्र्येणानुष्ठेयम्, उतान्यप्रयुक्त्या? आद्येऽपि न तावत्पुरुष द्दिश्य नित्यतया स्वतन्त्रमाधानं विधातुं शक्यम्; प्रोक्षणादिवत्कर्मकारकसंस रूपस्य धानस्य[9] द्रव्यपरतयाग्नेरुद्देश्यत्वात्। नापि स्वतन्त्रका यतया तद्विधेयम्, फलाश्रवणात्। न च सक्तुन्यायेन गुणप्रधानवैपरीत्यकल्पनया नित्याधिकारतां[10] कामाधिकारतां[11] वा शङ्कनीया; भस्मीकृतसक्तूनां[12] उपयोगासंभवेन तत्र वैपरीत्यकल्पनेऽ[13]पि प्रकृते संस्कृताग्नेः क्रत्वन्तरे विनियोगयोग्यतया तदसंभवात्। द्वितीयेऽपि किमाधानस्योत्तरनित्यक्रतुविधिप्रयुक्तिः, उतोत्तरकाम्यक्रतुविधिप्रयुक्तिः? नाद्यः; उद्देश्यस्यानुप देय-

---

१. C : निष्पाद्यमान
२. C inserts च
३. Manu, II-140
४. P omits आचार्यत्वफलश्रवणाच्च
५. C : आचार्यत्वकर कामः
६. T, V : निष्पाद्यते
७. C omits अन्तर
८. C : युक्त्या
९. Ś omits धानस्य
१०. Ś : धि ारि ा
११. Ś : ारिता
१२. T, V : भस ीभूत क्तुना
१३. C, Ś : त्कल्पने

स्याहवनीयस्य क्रतुविधि युक्तानु यत्वायोगात् । उपादेयमेव हि विधिरनु ापयति; अन्यथा स्वर्गकामादीनामप्य[1]नुष्ठेयत्वप्रसङ्गात् । तस्मादुत्तरका यक्रतुविधि युक्तिः प रिशिष्यते । न हि विधिरिव कामोऽप्युप-देयमेवानु ापयति, येनोक्तदोषः स्यात्; किं तु य[2]द्यदुद्देश्य प देयं वा विना ा यमानस्य न सिद्धिः तत्सर्वं विधिसहकारितय अनु ापयति । दृश्यते हि लोके विधिरागयोर्वै यम् । 'सौवर्णपीठे स पविशेत्' ति विधिस्तथाविधपी ाभावे पुरुषं न तत्रोपवेशय ति; रागस्तु तथाविधं पीठमुत्पाद्यापि तत्र निवेशयति । एवं च सति प्रकृतेऽप्याचार्य रण-ामनैवाचार्यप्रेरणद्वारेणाध्य पनसिद्ध्यर्थं माणवकेनाध्ययनं निर्वर्तयतीति स्थितम् ।

XVI. तदे त्र भ रमतं वेदा न्तिनो न ब ुमन्यन्ते । तथा हि । ि 'तमध्यापयीत' त्यत्राचार्यत्वं विधेयम्, उत विधिरूपम्, अथ वा नैयोगि फलम्? नाद्यः; उपनयनाध्यापनभाव र्थविषयत्वाद्विधेः । न द्वितीयः; आत्मनेपद त्राभिधेयस्याच यत्वस्य विधिपदानभिधेयतया विधिरूपत्वायोगात् । न तृतीयः; आचारान् ाहयतीति व्युत्पत्त्या हेतु र्तृत्वनिबन्धनस्याचार्यत्वस्य लौ कि त्वात्, अलौकि -स्यैव नैयोगिकत्वात् । न चोपनयनसाध्यत्वादलौकिकमाचार्यत्वं स्यादिति वाच्यम्; '[3]द्वितीयं जन्म तद्यस्मात्स अ चार्यः' इति स्मृतावुपनयनं ति हेतु र्तृत्वस्यैव लौकिकस्याचार्यशब्दनिमित्तत्वावगमात् । यद्याचार्यत्वमलौ ि स्यात्तदा व्य रणसूत्रे संमाननादिभिर्लौवि कैरर्थैः सह थं ठ्येत? ननु विध य त्ययश्रवणात् नियोगः प्रतीयते; तस्य नियोज्यविशेषणा ाङ्क्षायां स्वर्गवन्नियोगस ध्यत्वेनैव नियोज्य-वेशे णत्वमा च यत्वस्य भ्युपेतव्यम्, ारकफलस्य तदनुपपत्तेः; न चाचार ाह त्व पनयने [6]हेतुकर्तृत्वं चाचार्यशब्दप्रवृत्तिनिमित्तम्, वे -

---

१. P omits पि
२. P has only one यत्
३. Ś: द्विीयं
४. Ś: हिं
५. C: विशे ा ा क्षा ं
६. Ś: उप हेतु ृत्र्त

त्पपत्तेः; अतो मन्त्राद्यलौकिकसाधनान्तरविधानादलौकिकमाचार्यत्वम्; संमाननादीनां तु[1] तदभावाद्भवतु लौकिकत्वम्; अतस्तैः सह पाठेऽप्यलौकिकं एव[2]ाचार्यत्वम्। इतिचेत्, एवमप्युपनयन[3]नियोगफलं भविष्यति; तेनाध्यापनविधेः कुतः साधिकारता[4]?

XVII. अथ मतम् उपनयने श्रुतमप्याचार्यत्वमध्यापनफलं भविष्यति, उपनयनस्य तदङ्गत्वात् इति। तन्न; तथा सति 'अङ्गेषु फलश्रुतिरर्थवादः'[5] इति न्यायेनाचार्यत्वस्य नियोज्य[6]विशेषणत्वासंभवप्रसङ्गात्। नन्वेवं सत्यनधिकारमध्ययनं सर्वथा नानुष्ठीयेत; इति चेत्, न; उपनीतस्याध्ययनाधिकारित्वात्[7]; वाजसनेयिशाखायामुपनयनं प्रकृ[8]त्याध्ययनस्य विहितत्वात्; सर्वस्मृतिषु च 'उपनीतोऽधीयीत' इत्यवगमात्। अतोऽध्ययनस्य स्वविधिप्रयुक्तानुष्ठानोपपत्तौ तदनुष्ठानसिद्ध्येऽध्यापनेऽधिकारिणं परिकल्प्य न मनः खेदनीयम्। ननु न तं कल्पयामि, किं त्वस्त्येव सः; श्रुतौ दुःसंपादत्वेऽपि 'उपनीय तु यः शिष्यम्' इत्यादिमनुवाक्येन[9] तदवगमात्; इति चेत्, न; तद्वाक्यस्योपनयनाध्य[10]ापनानुवादेन कर्तुराचार्यसंज्ञाविधायकत्वात्, वाक्यगतयत्तच्छब्दाभ्यामनुवादविध्योर्निश्चयात्; आचार्यसंज्ञायाश्च नमस्कारादिविधानेषूपयोगात्।

XVIII. नन्वेवमप्यप्रबुद्धस्य माणवकस्योपनीतस्य[11] स्वाधिकारं प्रतिपद्यानुष्ठातुमशक्यत्वादध्यापनविधिरेव कथञ्चित्साधिकारोऽध्ययनमपि प्रयुङ्क्ते[12] इति वाच्यम्; इति चेत्, तत्र किमध्यापनविधिरविहितमध्ययनं

१. C omits तु
२. C omits एव
३. P : उपनयनम्
४. Ś : साधिकारिता
५. Cp. PM, IV-iii-1 (dravyasamskārakarmasu parārthatvāt phalaśrutir arthavādaḥ syāt)
६. P : नियोगस्य
७. V : अधिकारत्वात्
८. P : प्रकृत्य ; C : अध्हयहनाधिकारित्वात्
९. C, Ś : वाक्ये
१०. P omits अध्यापन
११. P omits उपनीतस्य
१२. T, V insert एव

प्रयुङ्क्ते, उत विहितम्? नाद्यः; अध्ययनविध्यप्रेरितानां तत्र[1] योजन-शून्यानां पुरुषाणामाचार्यं प्रति गुणभ वेन प्रवृत्त्ययोगात्। द्वितीये विधिस्वरूपसिद्ध्येऽध्ययनेऽधिकार्यपि स्वीकार्यः। विषय एव विधि-स्वरूपसाधको नाधिकारीति चेत्, तर्हि विहितस्याध्ययनस्याधिकारिवि-शेषाभावात् यं कंचिदध्यापयेदिति प्राप्नुयात्। तस्मात्प्रकरणसमर्पितेन उपनीतेनाधिकारिणा साधि ारोऽध्ययनविधिः स्वयमेव स्वविषये पुरुषं प्रवर्तयति; अन्यथा स्वाधिकारविधिनैवाप्रवर्तितस्य प्रवृत्त्यसंभवात्। न च बालकस्य स्वाधिकारप्रतिपत्त्यसंभवः; विध्यर्थापरिज्ञानेऽपि सन्ध्योपा-पासनसमिदाहरणादिकर्तव्यताप्रतिपत्तिवत् पित्राद्युपदेशसामर्थ्याद्ध्ययन-कर्तव्यताप्रतिपत्तेः। नन्वध्ययनस्य अध्यापनविधिप्रयुक्तौ नायं क्लेशः, आचार्यस्य प्रबुद्धस्य स्वाधिकारं प्रतिपत्तुं शक्यत्वात्[3]; यद्यपि कश्चित् प्रेक्षावान् माणवको न स्वाधिकारमबुद्ध्वा प्रवर्तेत, तथाप्यन्योऽप्रबुद्ध[2] आचार्यप्रेरितः प्रवर्तिष्यत एव; ततः प्रवाहरूपेणाध्यापनं न विच्छिद्यते; इति चेत्, एवमप्याचार्यः ि मन्येनोपनीतान् म णवकानध्यापयेत्, उत स्वेनैवोपनीतान्? नाद्यः; उपनयनस्यापि त्वन्मते अध्यापनाङ्गतय तद्वैकल्ये[4] नियोगानिष्पत्तावाचार्यत्वफलासिद्धेः[5]। तद्यस्तु[6] द्वितीयः, उक्तदोषाभावात्; इति चेत्, न; एवमपि नित्यानित्यसंयोगविरोधस्य दुरपवादत्वात्। तथा हि। अध्यापनं तावदनित्यम्, द्रव्यार्जनार्थ-त्वात्। न ह्याचार्यत्वमध्यापनफलं भवितुमर्हति; सुखप्रा ि दुःखपरि-हारतत्साधनरूपत्वाभावेनापुमर्थत्वात्। न चादृष्टं तत्फलत्वेन कल्प्यम्, दृष्टे सति तदयोगात्। अस्ति दृष्टम्[7],

षण्णां तु मणामस्य त्रीणि र्माणि जीविका।
याजनाध्यापने चैव विशुद्धा प्रति हः ॥[8]

इत्यध्यापनस्य द्रव्यार्जनोपायत्वेन स्मरणात्।

१. P omits तत्र
२. Ś : माणव स्य
३. P Ś : शक्तत्वात्
४. C : तद्दे वैकल्ये
५. P omits from नियोग to नित्यानित्य
६. T, V omit तत्
७. T omits this ; C inserts च after अस्ति
८. Ma u, X-76

XIX. ननु याजनस्य जीविकार्थत्वं[1] युक्तम्, ऋत्विग्भ्यो दक्षिणादिविधौ सति सर्वाङ्गानुष्ठापकस्य दक्षिणाद्यनुष्ठापकतया द्रव्यार्जनं निश्चित्य तदर्थिनां याजने प्रवृत्तिसंभवात्; अत्र तु भृत ध्यापन-निषेधात्, प्रकारान्तरेण द्रव्यार्जनभावात्[2], न तादर्थ्यमध्यापनस्य[3]। इति चेत्, मैवम्; माणवकस्याध्ययनाङ्गत्वेन गुरुदक्षिणादिविधानादङ्गि-न्यध्ययने[4]ऽनुष्ठापकस्याध्यापनविधेर्दक्षिणाशुश्रूषाद्यङ्गेष्वनुष्ठापकत्वात्। तस्मात् द्रव्यार्जनकामेन अनुष्ठेयत्वादध्यापनमनित्यम्; उपनयनाख्यस संस्कारो नित्यः, अकरणे दोषश्रवणात्।

आषोडशात्तु द्वाविंशाच्चतुर्विंशाच्च वत्सरात्[6]।

इति त्रैवर्णिकानामुपनयनस्यामुख्यं कालमभ्यनुज्ञाय पश्चात्स्मर्यते—

अत ऊर्ध्वं[5] त्रयोप्येते यथाकालमसंस्कृताः।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः॥
नैतरपूतैर्विधिवदापद्यपि च कर्हिचित्।
ब्राह्मान्यौनांश्च सम्बन्धानाचरेद् ब्राह्मणः क्वचित्॥[7]

इति।

XX. नन्वकरणे दोषश्रवणमात्रेणोपनयनस्य नित्यतायां य-श्चित्तस्यापि नित्यता प्रसज्येत;

अतीते चिरकाले तु द्विगुणं व्रतमर्हति।

इति प्रायश्चित्ताकरणनिमित्तदोषस्य निरासाय प्रायश्चित्तान रविधानात्; न हि प्रायश्चित्तं नित्यम्, दोषापनयनकामिनानुष्ठेयत्वात्[8]। उच्यते। न प्रायश्चित्ताकरणनिमित्तदोषनिरासाय द्विगुणं व्रत च्यते, किं तु य-श्चित्तेन निराकर्तव्यस्य पूर्वदोषस्यैवातीते चिरकाले द्विगुणव्रतापेक्षयैव

---

१. P : जीविताथैत्वं
२. T, V, Ś : द्रव्यार्जनाभावात्
C : द्रव्यार्जनात्
३. T : अर्थार्जनस्य
४. C omits अध्ययने
५. Ś : अध्ययन
६. Yājñavalkyasmṛti, I-37.
७. Manu, II-39,40
८. C, P, Ś : दोषापगम

निरास इत्युच्यते; अन्यथा प्रायश्चित्तानवस्थाप्रसङ्गात्। ततो नोपनयनस्य नित्यतायामतिप्रसङ्गः। तच्चोपनयनं नित्यभूतमध्ययनाङ्गत्वाङ्गिनोऽध्ययनस्यापि नित्यतां कल्पयति।

XXI. ननूपनयनस्याध्ययनाङ्गत्वमयुक्तम्, अध्ययनमनारभ्याधीतत्वात्। यद्यनङ्गत्वे संस्कारकर्मत्वं नोपपद्यते, तर्हि हिरण्यधारणवद् गत्यन्तरं कल्पनीयम्। 'हिरण्यं भार्यम्' इत्यत्र हि न तावद्धिरण्यधारणस्य प्रयाजादिवदर्थकर्मता घटते, कर्मकारकप्राधान्येन विधानात्। यदि संस्कारकर्मत्वम्, तदापि संस्कार्यहिरण्यद्वारा क्रतुविशेषेण स बध्येत, उत क्रतुमात्रेण? नाद्यः, विशेषसम्बन्धबोधकश्रुत्यादीनां अभावात्। न द्वितीयः, एकस्य संस्कारस्य सर्वक्रतूपकारित्वानुपपत्तेः। अतः संस्कारकर्मत्वं परित्यज्याभ्युदयफलः स्वतन्त्रो विधिरभ्युपगतः। एवमुपनयनविधिरपि स्वतन्त्र एवाभ्युदयफलः स्यात्।

XXII. अत्रोच्यते। अनारभ्याधीतस्योपनयनस्याध्ययनाङ्गत्व बोधकानां पूर्वतन्त्रतृतीयाध्यायोक्तश्रुत्यादिप्रमाणानामभावेऽपि, तत्रस्थचतुर्थाध्य योक्तविध्याक्षेपरूपोपादानप्रमाणेनोपनयनस्याध्ययनाङ्गत्वं सिध्यति। अनुपपन्नं स्वाचार्योपसत्तिमन्तरेणाध्ययनं लिखितपाठादिप्रतिषेधेन 'आचार्याधीनो वेदमधीष्व' इत्युपसत्तौ नियमविधानात्। तोऽध्ययनविधिरुपसत्तिं स्वाङ्गत्वेनाक्षिपति। तथोपनयनाख्यसंस्कारविधिश्च योजनमपेक्षमाण उपसत्तिसमवेतमेवादृष्टं कल्पयति, दृष्टसमवाय्यदृ संभवे स्वतन्त्रादृष्टायोगात्। ततश्चोपनयनाध्ययनविधिद्वयोपादानसामर्थ्यादध्ययनाङ्गत्व पनयनस्यावगम्यते। न च वाच्यम् अङ्गत्वेऽपि न प्रोक्षणादिवत्संस्कारकर्मतयाङ्गता, प्रयाजादिवत्फलोपकार्यतैव किं न स्यात्? इति। अङ्गिस्वरूपनिष्पादकतया संनिपत्योपकारिणः संस्कारस्याभ्यर्हितत्वात्; फलोपकार्यङ्गं तु नाभ्यर्हितम्, अपूर्व-

---

१. Ś : ापि

२. P inserts ति
Ś inserts विं

३. Ś : फ

४. Ś : अध्यापन

५. P Ś insert हि omitting स्व

६. T, V : अधीनश्चेदमधीष्व

७. Ś : कुतः

द्वारेणारादुपकारकत्वात् । अतो माणवकसंस्कारकर्मतयैवोपनयनमध्ययनस्वरूपोपकार्यङ्गम् । किं चोपादानप्रमाणवच्छ्रुतिप्रकरणे अप्यध्ययनाङ्गत्वमुपनयनस्य गमयतः; 'अष्टवर्षो ब्राह्मण उपगच्छेत् सोऽधीयीत' इति वाक्यविपरिणामस्य विवक्षितत्वात् । तच्छ्रुतिरेवोपनयनसंस्कृतं माणवकमादायाध्ययने विनियुङ्क्ते । न च तच्छब्देन माणवकस्यैव परामर्शो न संस्कारस्येति वक्तुं युक्तम्; संस्कारस्यानन्तरकृतत्वात् । न च श्रुतेरनाकाङ्क्षितस्य समर्पणप्रसङ्गः;[3] उपनयनाध्ययनयोरुपसत्तिद्वारा परस्परसाकाङ्क्षत्वस्य दर्शितत्वात् । ननु 'सोऽधीयीत' इत्यत्र संस्कृतो माणवकः प्रातिपदिकार्थ एव, न तु विभक्त्यर्थः; न च प्रातिपदिकमात्रमङ्गाङ्गिभावसम्बन्धं बोधयितुमलम्, द्वितीयाश्रुत्यादेरेव तद्बोधकत्वात्; इति चेत्; मैवम्; प्रातिपदिकस्याप्यन्विताभिधायितया सम्बन्धप्रतिपादकत्वात् । अन्विताभिधायित्वाभावे तत्प्रयोग एव न स्यात् । तस्मात् तच्छब्दश्रुतिरङ्गत्वं[4] गमयति । तथा प्रकरणमपि तद्गमकम्; वाजसनेयिशाखायां सर्वस्मृत्यनुमितश्रुतिषु चोपनयनं प्रकृत्याध्ययनविधानात् । न चैवमुपनयनप्रकरणे पठितमध्ययनमेवाङ्गं प्रयोज्येतेति[5] वाच्यम्; अध्ययनस्य फलवत्त्वात्, 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायेनोपनयनस्यैवाङ्गत्वप्राप्तेः । अत उपादानश्रुतिप्रकरणैरुपनयनस्याङ्गत्वं सिद्धम् । तच्चोपनयनं स्वयं नित्यभूतमङ्गिनोऽध्ययनस्य कथं न नित्यतामापादयेत्? न ह्यङ्ग्यभावे कदाचित्कुत्रचिदङ्गं संभवति । अस्ति चाध्ययनस्याप्युपनयनवदकरणे प्रत्यवायः,

योऽनधीत्य द्विजो वेदम्[6]अन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥[7]

'अश्रोत्रिया अननुवाक्या अनग्नयः शूद्रसधर्माणो भवन्ति' इति

---

१. C omits अपि
२. T, V insert एव
३. C : समर्पणेऽतिप्रसङ्गः
४. P, Ś omit तच्छब्द
५. C : ज्येतेति
६. Ś : वेदान्
७. Manu, II-167

स्मरणात्। तथा च नित्यमध्ययनं द्रव्यकामानुष्ठेयेनानित्येनाध्यापनेन[1] थं युज्येत? न च वाच्यं का यमप्य[2]ध्यापनं नित्यसमीहितजीवनफलहेतुत्वान्नित्यमिति; तावताध्यापनस्य नित्यवदनुष्ठानासिद्धेः। शब्दमाणाद्धि नित्यकर्तव्यताप्रमितौ[3] सन्ध्यावन्दनादाविवाकरणे प्रत्यवायभयान्नियमेन पुरुषः प्रवर्तेत[4]। अध्यापनस्य तु न शब्दान्नित्यकर्तव्यता मीयते, िं तु नित्यसमीहितस्य जीवनाख्यफलस्य हेतुत्वेन कल्प्यते। न हि तथा ल्पयितुं शक्यम्, अ[5]ध्यापनमन्तरेण याजनप्रति हादिनापि जीव[6]ननिष्पत्तेः।

XXIII. अथ मन्यसे उपनयनाध्यापनयोः नित्यपुत्रोत्पादनविधिशेषतया नित्यत्वं भविष्यति; नित्यश्च पुत्रोत्पादनविधिः, नापुत्रस्य लोकोऽस्तीत्यकरणे प्रत्यवायश्रवणात्; तथा 'त्रिभिर्ऋणवान् जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः जया पितृभ्यः[7]' इति ऋणत्रय पन्यस्य पश्चात् 'ए वा अनृणो यः पुत्री यज्वा ब्रह्मचारी चास्ति[8]' इति पुत्रिणः पितॄन् प्रत्यानृ यं दर्शयति; तच्चानृण्यं पुत्रस्य पि डपितृयज्ञाद्यनुष्ठानद्वारेण पितृतृप्तिहेतुत्वादुपपद्यते, तदनु ानं चानुपनीतस्य नधीतस्य वेदार्थमजानतो न संभवति; अतो नित्यस्य पुत्रोत्पादनविधेः फलपर्यन्ततापेक्षितमनुशासनं तच्छेषतया विधीयते 'तस्मात्पुत्रमनुशिष्टं लो यमाहुः तस्मादेनमनुशासति[9]' इति; ततश्च पितुरेव नित्यपुत्रोत्पादनविधिसामर्थ्यादुपनयनाध्याप[10]नविधीनां नित्यत्वं प्राप्तम् इति।

XXIV. नैतत्सारम्; संप्रत्ति मविधिशेषार्थवादरूपस्य 'तस्मात् पुत्रम्[11]' इति वा यस्यानुशासनविधाय त्वायोगात्। यदा हि पिता

---

१. Ś : म्यानु येन
२. P omits अपि
३. C : प्रतीतौ
४. T, V : वर्तते
५. C : ध्यापनस्याभावेऽपि
६. P : जी नस्य; C omits अपि
७. TS, VI-iii-10 (5)
८. Ibid.
९. Bṛh., I-v-17
१०. Ś : अध्यापनादिविधीनां
११. Bṛh., I-v-17

अरि ादिना स्वस्य मरणं निश्चिनुते, तदा स्वानुष्ठेयानि वेदतदर्थतत्फलानि पुत्रे समर्पयेत्; स च पुत्रस्तान्यनुष्ठेयतया स्वी र्यात्; तदेतत्संप्रत्तिकर्म। तथ च श्रूयते 'अथातः सं त्तिर्यदा ैष्यन्मन्यतेऽथ पुत्रम ह त्वं त्वं यज्ञस्त्वं लोक इति। स पुत्रः त्याहाहं ब्र ाहं य ज्ञोऽहं लो ः' इति[1]। तत्र च[2] संप्रत्तिकर्मणि पूर्वानुशासनमन्तरेणाकस्मादे सकल-कर्तव्यसंग्रहानुपपत्तेः फलपर्यन्तपुत्रोत्पादनविधिन आ क्षिप्तमनुशासनं पूर्वनि त्तमेवार्थवादतयानेन वाक्येनानूद्यते।

XXV. ननु मा भूदेतद्वा येऽनुशासनविधानम्[3]; तथ पि नित्य-पुत्रोत्पादनविधिसामर्थ्यादेव पितुरुपनयनाद्यनुशासनवि धिर्नित्य एव प्राप्तः; इति चेत्, मैवम्; पितुः पुत्रं प्रत्यननुष्ठापकत्वात्; अन्यथा स्तनन्धयस्येतरस्य वा मृतपितृकस्योपनयनाद्यभावप्रसङ्गात्। अनुशासनं तु कर्तव्यार्थोपदेशनमात्रमिति श्रौतलिङ्गादवग यते। तथा च श्रुतिः 'श्वेतकेतुर्हारुणेय आस तं ह पितोवाच श्वेतकेतो वस ह्मचर्यं न वै सोम्यास्मत लीनोऽननूच्य ब्र बन्धुरिव भवति[4]' इति। न च वाच्यम्· पितरि कथंचिन्मृते म णवक एवाचार्यान्तरमाहूय नित्य पन-यनादिकं संपादयिष्यति, ततोऽनु ापनमेवानुशासनमस्तु इति। त्र किं माणवकः स्वाधिकारसिरयर्थमाचार्यान्तरं करो ति, किं व आचार्य-नियोगसिध्यर्थम्? नाद्यः; अध्यापनप्रयुक्तिमध्ययनस्य वदता भवत माणवकस्य पृथगधिकारानङ्गीकारात्। न द्वितीयः। न ह्यन्यनियो-गोऽन्यस्य कर्तव्यबुद्धिमुत्पादयति। न चा र्तव्यानु ानाय साधन-संपादनं युक्तम्। अथ साधनान्तरप्रति निध्युपादानवदधि ारिणोऽपि प्रतिनिध्युपादानेन कर्तव्यं माणवकः संपादयेत्, तन्न[6], वै यात्। सर्वत्र धि ारिणः कर्तव्यमनुष्ठातुं साधनान्तरप्रतिनिधिरादीयते[8]। अधि ारि-

१. Bṛh., I-v-17
२. Ś omits
३. C: ाक्यमनुशा नविधाय म्
४. Chand., VI-i-1.
५. P omits हि and reads
६. Ś omits तत्
७. Ś: ि ा
८. Ś: आद्रियते

तिनिधिस्तु स्यं तव्यमनुष्ठातुमाद्रीयते[2]? न तावन्मृतस्याचार्यस्य कर्तव्यं संभवति, विधिसम्बन्धनिमित्तस्य निवृत्तत्वात्। नापि प्रतिनिधित्वेनोपादेयस्याचार्यस्य तत्संभवः, तस्याचार्यस्य कर्तव्यत्वसिद्ध्युत्तरकालीनत्वात्। अतो न माणवक आचार्यान्तरमादायाध्येतुमर्हति।

XXVI. अथ मृताचार्यशिक्षितं[3] माणवकमन्य आचार्यः स्वीकृत्य स्वाधिकारं निर्वर्तयितुमध्यापयेत्, तदप्ययुक्तम्; पूर्वोपनीतस्य माणवकस्याचार्यान्तरेण पुनरुपनयनासंभवे सत्युपनेतृत्वलक्षणस्याङ्गस्य वैकल्येऽङ्गिनोऽध्यापनस्य निष्पत्त्ययोगात्। न चानेनाचार्येणाङ्गभूतमुपनयनं माणवकान्तरेऽनुष्ठितमिति वाच्यम्; तथा सत्यङ्गिनोऽध्यापनस्यापि तत्रानुष्ठितत्वेन पुनरनुष्ठानायोगात्। अथ[4] स्वोपनीतस्याध्यापनात् प्रागेव मृतावङ्गिमात्रानुष्ठानाय माणवकान्तरस्वीकारः, तर्ह्यनुपनीतमप्यध्यापयेत्। यदि स्वोपनीतानध्याप्य द्रव्यबाहुल्यायान्यानप्यध्यापयतीत्युच्येत, तदा दरिद्रं नाध्यापयेत्। शुश्रूषार्थं दरिद्रमप्यध्यापयिष्यतीति चेत्, एवमपि त्वन्मते लौकिकवैदिकव्यवहारविरोधो[5] दुर्वारः। लोके हि माणवककर्तव्यनिष्पत्तये एवाचार्योऽन्विष्यते, नाचार्यकर्तव्यनिष्पत्तये माणवकः। वेदेऽपि सत्य मो ह जाबालो ब्रह्मचर्यायाचार्यं स्वयमेवान्विष्योपमन्त्रवानिति ग यते। तथा च श्रुतिः 'स ह हारिद्रुमन्तं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तम्[6]' इति। तदेवमध्यापनस्य नित्यत्वे बहुदोषसद्भावात्, अनित्येन च तेन नित्यस्याध्ययनस्य प्रयुक्तौ नित्यानित्यसंयोगविरोधात् स्वविधिप्रयुक्तमेवाध्ययनमङ्गीकार्यम्।

XXVII. ननूपगमनाध्ययनयोः[7] स्वविधिप्रयुक्तत्वे सति तत्प्र-

१. P, T, V omit कस्य
२. Ś : आद्रियते
३. C : ाचार्यशिष्यं
४. T, V : न्यथा
५. This is the reading of C; all others omit विरोधः
६. Chand, IV-iv-3.
७. C, T, V : उपनयमाध्ययनयोः

युक्ततयैवोपनयनाध्यापनसिद्धेः 'उपनयीत तमध्यापयीत' इति तद्विधानमनर्थकम; इति चेत्, मैवम्। नात्राचार्यव्यापारयोरुपनयनाध्यापनयोः विधिः, किं तु माणवकव्यापारयोरुपगमनाध्ययनयोः। ननु वाक्ये प्रयोजककर्तुराचार्यस्य व्यापारौ प्रतीयेते; तत्र साक्षात् तुर्माणवकस्य व्यापारयोः स्वीकारे विरोधः स्यात्; इति चेत्, तत्र न तावत् न्यायविरोधः[1]; जीवनार्थतया प्राप्तावाचार्यव्यापारावनूद्य अप्राप्तयोर्माणवकव्यापारयोर्विधानस्य न्याय्यत्वात्। नापि शब्दविरोधः; 'एतया [2]ग्रामकामं याजयेत्' इत्यत्र प्रयोजकव्यापारमन्तरेण स्वार्थेऽपि णिच्प्रत्ययप्रयोगदर्शनात्। याजनस्य[3] वृत्त्यर्थतया ा स्यानुवादेनाप्राप्तं यजनमेव विधीयते। एवं 'अध्यापयीत' इत्यत्र किं न स्यात्?

XXVIII. ननु 'याजयेदध्यापयेत्' इत्यत्र कर्तृव्यापारस्य धात्वर्थतया प्रयोजकव्यापारस्य[4] णिच्प्रत्ययार्थतयावगमादे तरस्य सिद्धस्यानुवादेनेतरस्य विधिरस्तु। 'उपनयीत' इत्यत्र तु धात्वर्थस्यैव प्रयोजकव्यापारत्वादनभिधीयमानः कर्तृव्यापारः कथं विधीयते? न च वाच्य पनयने मा भून्माणवकव्यापारविधिः, अध्यापने तु भविष्यतीति; वाक्ययोः सारूप्यात्। उच्यते। प्रयोजकव्यापाराभिधायिनापि नयतिधातुना माणवकव्यापारस्यानभिधीयमानस्यापि ग यमानताया वक्ष्यमाणत्वात् स एव धातुना लक्षणयोपादाय विधीयते, न प्रयोजकव्यापारः; तस्य स्वयमेव प्राप्तत्वात्। ननु तत्प्रा ः दुःसंपादा, इतरेतराश्रयत्वप्रसङ्गात्; दक्षिणाशुश्रूषाद्यङ्गसहिते ह्यध्ययने माणवकस्य विहिते, तस्य च स्वविधिप्रयुक्तौ सत्याम्, त्यर्थतया आचार्यप्रवृत्तिः प्राप्नोति; वृत्त्यर्थप्र त्तौ[5] प्राप्तायां तदनुवादेन माणव - व्यापारोऽध्ययनादिर्विधातुं शक्यत इति। मैवम्; 'ग्राम ामं याजयेत्' इत्यत्र याजनप्राप्तेरपि दुःसंपादत्वप्रसङ्गात्; दक्षिणाद्यङ्गसहिते

१. T, V omit all the words after the first विरोधः
२. P reads अ ा ामं
३. Ś inserts हि
४. T, V omit धा र्थ या प्रयोज व्यापारस्य
५. Ś adds च

तृव्यापारे विहिते सति वृत्त्यर्थत्वेन योजकव्यापारप्राप्तिः, तत्प्राप्तौ च दनुवादेन तृव्य पारविधिरिति परस्पराश्रयत्वात् । अथ स्वविधिप्रयुक्ते यागान्तरेषु स मान्येन त्त्यर्थतया प्रा ं योजकव्यापारमनूद्य मस्य यागविशेषो विधीयेत, तर्हीहापि विध्यन्तरेषु सामान्यप्राप्तयोज व्यापार नुवादेनोपग नाध्ययनादिमाणवकव्यापारो विधीयताम् । ननु याजनात्म ए योजकव्यापारो यागान्तरेषु प्राप्तोऽस्ति; उपनयनाध्यापनात्मकस्तु था न विध्यन्तरेषु प्तः; इति चेत् , तर्हि भाविनी प्तिरस्त । णव व्यापारविधिसामर्थ्यादेव योजकव्यापारः प्राप्स्यते, तत्पूर्वकत्वान्माण व्य प रस्य । न च वैपरीत्येन प्राप्तिः शङ्क्याः; न नित्येन नित्यें[2] प्तिः संभवतीत्युक्तत्व त्[3] । ननु प्राप्तस्योत्पत्तिविध्यसंभवेऽपि तदनुवादेनाधि रवि धिः स्यात् ; इति चेत् , नः वाक्ये जीवनादिनित्य म्याधिकारयोरश्रवणात् ।

XXIX. तर्हि 'अरुणया पिङ्ग क्ष्य क्रीणाति[4]' इतिवत् गुणविशे विधिरस्तु ; स च गुणोऽ वर्षत्र णाख्यः; इति चेत् , नः ब्राह्मणत्व वर्षत्वाख्ययोर्गुणयोरुभयोरपि विशेषणतया परस्परसम्बन्धरहितयोः विशिष्ट विध्ययोगात् ; पृथग्विधाने वाक्यभेदप्रसङ्गात् । अरुणवाक्ये तु विशेष्यस्य यागसाधनक्रयणस्याप्यन्यतोऽप्रा स्य विधेयता अरुणादीनामनेके मपि विशेषणानां तदन्वये सति विशिष्टविधानं युक्तम् । न थेह योज व्यापारो विधेयः, प्तत्वात् । अतो नानेकेषु गुणविधिः । तदुक्तम्

ि मणि नानेको विधातुं शक्यते गुणः ।
अ ा तु विधीयन्ते बहवोऽप्येकयत्नतः ॥[5]

इति ।

---

१. P, Ś : ादिर्माणव व्यापारः ं भाविनी
२. Ś : नित्यस्य
३. Ś : स्ति instead of ं भ ति; C ; न हि नित्य ाहिः अनित्येन
४. TS, VI-i-6 (7)
५. Tantravārtika, II-ii-6.

XXX· ननु प्रयोजकव्यापारस्य ाप्तत्वाद्यथा विधिर्निराक्रियते तथा माणवकव्यापारस्यापि स निराकर्तुं शक्यः[1]; 'माणवक[2]प-नयीत' इत्यत्र कर्मभूतस्य माणवकस्य व्यापारा तीतेः[3]; न हि 'ामं गच्छ' इत्यत्र ग्रामस्य[4] व्यापारः प्रतीयते। मैवम्; शब्दतो न्यायतश्चात्र माणवकस्य उपगमनव्यापारप्रतीतेः। लोके हि नयत्यर्थवाचिशब्दप्रयोगेषु नीयमानस्य गमनं[5] दृष्टमिति शब्दतस्तत्प्रतीतिः। था बालानामक्षरशिक्षायै शिक्षकगृहं प्रति गमनं दृष्टम्। ततो न्यायोऽपि माणवकव्यापारं प्रत्याययति। न हि प्रेक्षावान् माणवको विधिमन्तरेणाध्ययनादौ प्रवर्तते; अर्थावबोधादिदृष्टफलार्थत्वनिराकरणे रागतः प्रवृत्त्ययोगात्। ततो वाक्यविपरिणामेन माणवकव्य पारोऽत्र विधातव्यः। यथा 'ामकामं याजयेत्' इत्यत्र 'ग्रामकामो यजेत्' इति विपरिणामः, तथा 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्रापि 'अ वर्षो ब्रा ण उपगच्छेत्, सोऽधीयीत' इति विपरिणामः स्यात्।

XXXI. नन्वेवमपि नात्र विधिः सङ्गच्छते, निरधिकारित्वात्[6]। न तावदत्राष्टवर्षत्वमात्रमधिकारनिमित्तम्, शूद्रस्याप्युपनयनादि[7]सङ्गात्; नापि ब्राह्मण्यमात्रम्, जातमात्रस्य[8] तत्प्रसङ्गात्; नाप्युभयम्, तयोः परस्परान्वयाभावात्, 'गुणानां च परार्थत्वात्[9]' इति न्यायात्। अथ मन्यसे तयोरपि पार्ष्ठिकः परस्परान्वयो भविष्यति; यथा अरुणावाक्ये[10] 'अरुणया क्रीणात्येकहायन्या क्रीणाति[11]' इति प्रत्येकं शाब्दे क्रियान्वये पश्च देकप्रयोजनत्वसामर्थ्यात्परस्परान्वयः, तद्वत् इति। तन्न; तथा सत्यधिकारहेतोरशाब्दत्वप्रसङ्गात्। अतो निरधिकारो विधिरयुक्तः।

१. P : शक्यम्
२. C, Ś : उपनीत त ध्यापयी
३. P : न ग नव्यापारः प्रतीयते
Ś : माण व्यापारप्रतीतेः
४. Ś : ामकामस्य
५. P, Ś, T, V : गमन
६. C : अधिकारि
७. C omits ादि
८. Ś inserts पि
९. PM, III-i-12; Ś : परार्थत्वाद- न्ध इति
१०. C omits ावाक्ये
११. P, T, V omit एकहायन्या क्रीणाति

XXXII. नैष दोषः; शाब्दमेव सर्वत्राधिकारनिमित्तमिति नियम भावात्। साङ्ग मनुष्ठानसामर्थ्यस्याशाब्दस्याप्यधिकारहेतुत्वात्। थंचिच ाब्दत्वनियमेऽपि क्रियास बन्धाभिधानमुखेन विशिष्टसमर्पणे शब्दद्वयस्य तात्पर्यकल्पनात् तत्सिद्धिः।

XXXIII. नन्वेवमपि वि शि स्य नाधिकारनिमित्तत्वम्; उपादेयविशेषणत्वात्। तथा हि। 'तमध्यापयीत' इत्यत्र प्रयोजकव्यापारं ति माणवकस्य कर्मताभिधायिनी द्वितीयाविभक्तिः स्वव्यापारं प्रति माणवकस्य तृत्वं गमयति, 'कुर्वन्तं प्रयुङ्क्ते' इति न्यायेन प्रयोजकव्यापारस्य तृविषयत्वात्। न च वाच्यम् 'अध्यापयीत' इति व ये विपरिणामस्योक्तत्वान्माणवकस्याधिकारित्वम्, न तु कर्तृत्वम्, इति; तत्र हि प्राप्तप्रयोजकव्यापारानुवादेन कर्तृव्यापारे विधिसम्बन्धमात्रं परिण यते, न तु शब्द ासं माणवकस्य कर्तृत्वं पराक्रियते। अत उपादेयो माणव ः, तल्लक्षणवत्त्वात्। साक्षाद्वा पर परया वा विधिविषयतय अनुष्ठेयमिति तल्लक्षणम्; कर्त्रादयश्चानुष्ठेयं प्रति कारकत्वात्परपरयानुष्ठेयाः। अतः कर्तुरुपादेयस्य माणवकस्य यद्विशेषणं जातिविशि वयः न तदधिकारनिमित्तम्; 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यादौ तृविशेषणस्य लोहितोष्णीषत्वादेरधिकारनिमित्तत्वादर्शनात्। न च तैवाधिकारी, कर्तुरनुष्ठेयकारकतया विधिं प्रति गुणभूतत्वात्, अधिकारिणश्च विधिं प्रति स्वामितया प्राधान्येनान्वयात्। न चैवमधि रहेतोरेवासंभवः; अनुपादेयविशेषणस्य तद्धेतुत्वात्। [६]विधिप्रयुक्तानुष्ठेयतद्विशेषणव्यतिरेकेण विधिस बन्ध्यनुपादेयम्; तादृशविशेषणं च जीवनगृहदाहस्वर्गकामनादि। अत्र त्वष्टवर्षत्वाद्युपादेयविशेषणम्; तत्कथमधिकारहेतुः स्यात्?

XXXIV. अत्रोच्यते। किं भावनाया वाक्यार्थत्वमाश्रित्येदं

---

१. C : अधि रि
२. Cp. Āp. ŚS, XXII-iv-23.
३. P omits
४. T omits विधिं प्रति
५. Ś : अ पादेयः'
६. P : विधिप्रयुक्तेऽनु ये

ब्रवीषि, उत नियोगस्य, अथ वा इष्टसाधनत्वस्य[1] ? नाद्यः; तत्राधिकारान्वयस्य कर्त्रन्वयपूर्वकतया कर्तृविशेषणस्यैवाधिकारहेतुत्वात् । पुरुषप्रवृत्तिर्हि भावना । सा च क्रियात्मिका सती स्वरूपनिष्पादकानि ारकाणि प्रथममपेक्षते । तत्र पुरुषार्थधात्वर्थयोः भाव्यत्वेन तत्करणत्वेन चान्वये सति परिशेषात्स्वर्गकामादयः कर्तृत्वेनान्वीयन्ते । तस्य च कर्तुर्व्यावर्तकानि जीवनगृहदाहकामनादीनि । ततः कर्तुरेव फलनियमात् स एव कर्ता फलभोक्तृत्वोपाधिना स्वामित्वादधिकारं प्रतिपद्यते । अतश्चोपादेयकर्तृविशेषणान्येवाधिकारिणोऽपि व्यावर्तकानि सम्पद्यन्ते ।

XXXV. नन्वस्तु तर्हि द्वितीयः । नियोगो हि स्वरूपोपाधित्वेनैव नियोज्यविषयावपेक्षते, विना ताभ्यां कस्य कस्मिन्नियोग इत्याकाङ्क्षाया अनिवृत्तेः । ततो[2] वाक्यगतस्वर्गकामादिर्नियोज्यत्वेन[3] धात्वर्थश्च विषयत्वेनान्वेति । न चात्राधिकारान्वयः पृथगपेक्ष्यते; 'मम यं नियोगः' इति प्रतिपत्तुर्नियोज्यस्यैव तत्स्वामितया अधिकारित्वात् । स चाधिकारी विषयानुष्ठानमन्तरेण नियोगनिष्पत्तिमपश्यंस्तदनुष्ठाने र्तृतयान्वयं गच्छति । तथा चास्मिन् पक्षेऽधिकारान्वयदशायां स्वर्गादीनामनुपादेयविशेषणत्वं व्यवस्थितम् इति ।

XXXVI. तदेतदसारम्; प्रकृताप्रतिपक्षत्वात् । नियोगवादिनो ह्यनुपादेयविशेषणमेवाधिकारहेतुरिति वदन्तोऽपि चित्कर्तृविशेषणेनाधिकारिणं व्यावर्तयन्ति; 'राजा स्वाराज्यकामो राजसूयेन यजेत' इत्यत्र कर्तृविशेषणेन राजत्वेन स्वाराज्यकामस्याधिकारिणो विशेषणीयत्वात्; अन्यथा स्वाराज्यकामस्य वैश्यादेरपि तदधिकारप्रसङ्गात् । न चैवमनुपादेयमेवाधिकारहेतुरिति नियमस्य भङ्गः; राजत्वस्य वैश्यादिभिरनुष्ठानेनानिष्पाद्यस्यानुपादेयत्वात् । एवं च[4] प्रकृतेऽप्यन्येनानुष्ठानादसंपाद्यस्याष्टवर्षोपेतब्राह्मणत्वस्य[6] कर्तृविशेषणत्वेऽप्यधिकारहेतुता किं न स्यात् ?

---

१. All texts read साधनस्य
२. C inserts अपि
३. T adds एव
४. P omits च
५. Ś : अन्यैः
६. Ś : । व्यस्य

XXXVII. नन्वेवं तर्हि तृतीयः पक्षोऽस्तु । तत्र श्रेयः-साधनरूपे[1] वाक्यार्थे श्रेयसो भोक्तव्यरूपस्य भोक्त्राकाङ्क्षायाः प्राथम्यात्[2] तत्साधनस्यापि भोक्त्रन्वयः[3] प्रथमभावी । न च साधनस्य कृतियोग्यतया कर्त्राकाङ्क्षस्य कर्त्रन्वय एव प्राथमिक इति शङ्कनीयम् ; कृतियोग्यताया अनियमात् ; श्रेयःसाधनेऽपि चन्द्रोदयादौ तददर्शनात् । यत्रापि तद्योग्यतास्ति, तत्रापि श्रेयसः[4] प्रधानत्वात्तदनुसारेणान्वयो वाच्यः । अथ साधनस्य[5] वाक्यार्थत्वात्[6] तत्प्राधान्यम्, तथापि तत्स्वरूपोपाधिभूतं हि श्रेयः 'कस्य साधनम्[7]' इत्येवं तन्निरूपकत्वात् । साधकापेक्षा तु विशिष्ट-साधनप्रतीत्युत्तरकालीना । ततः प्रथमप्रतीतश्रेयोऽनुसारेण भोक्त्रन्वये सति पश्चादभिलषितसाधनत्वस्यात्र कृतियोग्येष्टसाधनत्वार्थनिष्ठतया विधिना[8] चोदितत्वात्, कृतेश्च कर्त्रपेक्षत्वात् स एव भोक्ताधिकारी कर्तृतां प्रतिपद्यते । ततोऽस्मिन् पक्षेऽनुपादेयस्यैवाधिकारिविशेषणता इति ।

XXXVIII. एवमपि कृते नास्ति विरोधः; उपगमरूपेऽभि-लषितसाधने प्रथमं भोक्तृतया अधिकारान्वयं[9] प्राप्तस्य माणवकस्य पश्चात्कर्त्रन्वयं प्राप्स्यतोऽपि यद्विशेषणं ब्राह्मण्यादि तस्यानुपादेयविशेषणत्वात् । अतोऽङ्गभूतस्योपगमनस्य साधिकारित्वे सति अङ्गिनोऽध्ययनस्यापि तत्सिध्यति, अङ्गाङ्गिनोः सर्वत्रैकाधिकारित्वात् ।

XXXIX. नन्वेवं तर्हि ब्राह्मण्यवदष्टवर्षत्वस्याप्युपगमनाधिकारहेतोरध्ययनेऽप्यन्वयात् नवमवर्षादर्वागेवाध्ययनसमाप्तिः प्राप्ता; स च दुःशका; इति चेत्, न; अङ्गाङ्गिनोः कालैक्यानियमात् । अन्यथा अङ्गमन्वाधानं पर्वण्यनुष्ठायाङ्गिभूताया इष्टेः प्रतिपद्यनुष्ठानं न संभवेत् ।

---

१. T : साधनत्वात्
२. Ś : प्राधान्यात्
३. Ś : भोक्त्रा अन्वयः
४. P : साधनत्वात्
५. P : स्य
६. C, Ś omit तत्
७. C, Ś insert इत्याकाङ्क्षायां श्रेयः साधनं between कस्य साधनं and इत्येवं
८. P, Ś : विधिचोदितत्वात्
९. C : अभिधानान्वयं

इति चेत्, तर्हि तेषामिह ग्रहणे भौतिककार ां भूतपञ्चकमेव ब्र त्वेन सूत्रे लक्षितमिति बुद्धिः स्यात्। अतः श्रुत्युक्ता जन्मादयस्त्रय एवात्र ाह्याः। न हि श्रुतिर्मूलप्रमाणमपेक्षते येनोक्तदोषः स्यात्। अतो य त्कि ज्जन्म-वद्भूतभौतिकं तस्य सर्वस्य मूलकारणत्वेन श्रुत्युक्तं ब्र ैवात्र लक्षित-मित्यवगम्यते।

XXIV. नन्वेवमपि सूत्रे श्रुत्युक्तं जन्मैव[1] सूच्यताम्, तावतै-वोक्तार्थसिद्धेः; इति चेत्, न; केवलनिमित्तकारणत्वशङ्काव्युदासार्थत्वात् स्थितिप्रलययोः। न ह्यनुपादाने केवलनिमित्ते स्थिति लयौ संभवतः। यद्यपि जन्मस्थितिप्रलया निरुक्तकारेणाप्युक्ताः, तथापि न तद्वचनद्व रा श्रुतिमूलत्वं सूत्रस्य कल्पनीयम्; सूत्राणां साक्षाच्छ्रुत्यर्थनिर्णयपरत्वात्। अन्यथा[2] ऋषिवाक्यान्येव वक्ष्यमाणसूत्रैरुदाहृत्य निर्णीयेरन्। तैस[3] ात् 'यतो वा इमानि भूतानि जायन्ते'[4] इत्येतच्छ्रुत्युक्तानेव जन्मस्थितिनाश न् साक्षात् सूत्रे निर्दिश्य तत्कारणं ब्रह्मेति लक्ष्यते।

XXV. ननु कथं ब्रह्मणः कार त्वम्? किं ब्रह्म पूर्वरूपं परित्यज्य रूपान्तरेण परिणमते उत अप रित्यज्य विवर्तते। आद्ये सृष्टेरुपरि ज्ञानानन्दरूपस्य ब्रह्मण उच्छेदः स्यात्। अथ जगद्रूपेण परिणतं तद् ब्रह्म पुनरपि प्रलयावस्थायां ज्ञानानन्दब्र रूपेण परिणमेत, तथापि तस्य ब्रह्मणः पुनर्जगदाकारपरिणामस्वभावित्वात् अनिर्मोक्षप्रसङ्गः। न च सृष्टिश्रुतिः परिणामे प्रमाणम्; तस्याः सृष्टिमात्रोपक्षीणायाः पूर्वरूपपरित्यागापरित्यागयोः ताटस्थ्यात्। न च श्रुत्यन्तरं परिणामे संभवति, 'अज आत्मा महान् ध्रुवः'[6] इति ध्रुवशब्देन परिणा-मविरुद्धकौटस्थ्याभिधानात्। कूटस्थत्वं च ब्रह्मणो निरवयवत्वा-दुपपन्नम्।

१. C omits एव
२. Ś, C insert हि
३. C : तत्र तस्मात्
४. Taitt., III-i.
५. Ś : उप ेणा ं
६. Bṛh., IV-iv-20.

XXVI. ननु निरवयवमपि परिणमत एव। तथा हि। हेमगतरुचकादिपरिणामः परंपरया परमाणुपर्यवसायी, अवयववृत्तित्वात्, संयोगवत्। संयोगो हि अवयव्येकदेशसमवेतः परंपरया निरवयवपरमाणुसंयोगपुरःसरः सिद्धः इति।

XXVII (a). तत्र वक्तव्यं 'कोऽयं परिणामः?' इति। मृत्पिण्डस्य घटरूपापत्तिरिव स्वावयवानां पूर्वसंयोगात् संयोगान्तरप्राप्त्या संमूर्च्छितावयवत्वं परिणामः? तक्राद्यातञ्चनावयवसंयोगेन क्षीरस्य दधिभाववत् अवयवान्तरसंयोगेन संमूर्च्छितावयवत्वं वा? यूनो वृद्धत्ववदवस्थान्तरं वा? भस्मन्यस्त भाद्यापत्तिवत् अन्यथाभावो वा? अणोरण्वन्तरसंयोगेन द्व्यणुकापत्तिवत् वस्त्वन्तरसंयोगो वा? उदकस्य नदीभाववत् परिस्पन्दो वा? पक्वफलस्य वर्णान्तरवत् गुणान्तरोदयो वा? उपादानानुरक्तद्रव्यान्तरोत्पत्तिर्वा?

XXVII (b). न तावत् प्रथमद्वितीयौ; निरवयवस्य तादृशपरिणामानुपपत्तेः।

XXVII (c). नापि तृतीयचतुर्थौ; तथा सति जगदाकारपरिणामे निर्मोक्षभावानुपपत्तौ अनिर्मोक्षप्रसङ्गः; न हि वृद्धः कदाचिदपि[2] युवा भवति; नापि भस्म भावक्षरूपेण रोहेयुः[3]; क्वचित्पुनः रोहोऽपि[4] दृश्यत इति चेत्, तर्हि मोक्षस्यापि तथा पुनः परिणामरूपत्वे सति अनित्यत्वं दुर्वारं स्यात्।

XXVII (d). नापि पञ्चमषष्ठसप्तमाः; परिणामलक्षणस्यातिव्याप्तेः; वस्त्वन्तरसंयोगिन्यणौ परिस्पन्दमाने भ्रमरे लौहित्योदयवति च पटे द्रव्यपरिणामबुद्ध्यभावात्।

XXVII (e). नाप्यष्टमः, अवयविनस्तथा परिणामेऽपि अवयवपरिणामस्य दुर्भणत्वात्। किं हेमावयवानां रुचकरूपेण परिणामः, किं वा रुचकोपयुक्तद्रव्यान्तररूपेण, उत रुचकोपयुक्तावस्थान्तररूपेण?

---

१. Ś: अवयवि
२. C omits अपि
३. C: प्रतिरोहेयुः
४. C: प्रतिरोहोऽपि

नं तावत् द्वितीयतृतीयौ, रुच व्यतिरेके। तदुपयुक्तद्रव्यान्तरा-
वस्थान्तरयोरदर्शनात्। नापि थमः, रुच स्य अवयविकार्यत्वात्;
अवयव यत्वे च आरंभवाद सङ्गात्। न चावयवानां रुच ानुगमानु-
पपत्तिः, अवयविद्वारा तदुपपत्तेः। न चाश्रयावयवेषु विकारमन्तरेण
आश्रितावयविनि वि र नुपपत्तिः, परमाणौ असतोरेव जन्मविनाशयोः
द्व्यणुके दर्शनात्। जन्मविनाशव्यतिरिक्तधर्मस्य तथात्वमिति चेत्, न;
कपालेष्वसत्या एव घटत्वजातेः घट[1]समवेतत्वात्। व्याप ानां अवय-
वानां अवस्थान्तरमन्तरेण व्य प्यस्य अवयविनः अवस्थान्तरं नोपपन्न[2]-
मिति चेत्, न; व्य प योः जातिगुणयोः अवस्थान्तराभावेऽपि व्याप्य-
द्रव्ये तद्दर्शनात्। अस्तु वा अवयवानां परिणामः; तथापि अवय वेपरि-
णामप्रयुक्तत्वात् नासौ ब्रह्मपरिणामस्य द ान्तः। न हि ब्र ावयवकं[3]
परिणामि किञ्चिदस्ति, यत्प्रयुक्तो परिणामः स्यात्। निरवयवत्वात्
अवय वि‿ष्टान्तेनापि ब्र णः न[4] परिणामसिद्धिः।

XXVIII. यत्तु निरवयवसंयोगवत् परिणाम इति, तत्रापि
किं ‿श्यमानावयविसंयोगस्य परमाणुसमवेतत्व च्यते? उत परमाणु-
संयोगपूर्वकत्वं कल्प्यते? नाद्यः, परमाणुगतरूपादिव[5]त्प्रत्यक्षत्वप्रसङ्गात्[6]।
न द्वितीयः, अवयविन्येव घटत्वजातिसमवायवत् संयोगोपपत्तेः। अव-
यवानां संयोगे अनुगमस्त्ववयविद्वारा अन्यथासिद्धः। संयोगस्य अव-
यविवृत्तित्वे कृत्स्नव्यापित्वप्रसङ्गेन अवयवेष्वेव वृत्तिः इति चेत्, तर्ह्यव-
यविनां तन्तूनां संयोगासंभवेन पटानारंभप्रसङ्गः। कृत्स्नव्यापित्वं तु
तार्कि ति अवयवा त्तिपरमाणुसंयोगोदाहरणेन परिहर्तव्यम्; अन्यान्
प्रत्याकाशवर्ती शब्द उद हार्यः[7]। तस्मान्न संयोगद ान्तेन निरवयवपरि-
णामोऽनुमातुं शक्यः[8]।

---

१. Ś : घटे
२. C : नोपप ते
३. C : ब्रह्मावय परि ामि
४. This न, which is essential, is found only in T and Ś.
५. C : द्रूपादि
६. C : प्र ङ्गात्
७. C : उदा व्यः
८. T : योग्यः

XXIX. ननु थं ब्र णो निरवयवत्वं येन परिणामो निरा-क्रियेत ? सावयवत्वस्य दुर्भणत्वात्, श्रुतेश्च इति वदामः । सावयवत्वे किं अवयवावयविनोः उभयोरपि स्वप्रकाशत्वं उतान्यतरस्यैव ? आद्ये तयो-रितरेतराविषयत्वात् न केनचिदपि सावयवत्वं तीयात्[1]; द्वितीये घट त्म-नोरिव तयोः न अंशांशिभावसिद्धिः[2]। श्रुतिश्च 'निष्कलं नि ष्क्रियं शान्तम्[3]' इति क्रियावयवशून्यतामाह । नियन्तृत्वादिक्रियापि[4] श्रूयत ति चेत्, तर्हि तत्त्वतो निष्क्रियत्वं मायय सक्रियत्वमिति व्यवस्था अस्तु; 'मायाभिः पुरुरूप ईयते' इति[5] विनिगमश्रुतेः; निर्व्यापारस्य चेतनस्य सुषु पुरुषार्थत्वानुभवेन नि ष्क्रियत्वस्य तात्त्विकत्वोपपत्तेः । न च ब्रह्मप्र त्तेः मायिकत्वे यु त्यभावः, स्व[6] वृत्तिवत् निष्प्रयोजनत्वेन मिथ्यात्वोपपत्तेः । तदेवं निरवयवं ब्र न परिणमते, किं तु विवर्तते ति द्वितीयपक्षोऽङ्गी ार्यः । स्मिन्नपि पक्षे पूर्वरूपमपरित्यजतो ब्र णो निर्वि रत्वात् जगद्रूपेण वि रिष्यमाणं वस्त्वन्तरं किञ्चिदङ्गीकार्यम् । तत् माय उत अन्यत् ? नान्यत्, ब्र म याभ्यां व्यतिरिक्तस्य सर्वस्य ार्यत्वेन मूल ारणत्वायोगात् ।

XXX. मायापक्षेऽपि ि 'माया ज्ञ तथा मेधा' इत्यभि-धानमनुसृत्य मायाशब्देन प्रज्ञोच्यते, उत पामरप्रसिद्ध्या मन्त्रौषधादिः, अथ वा स्व ीयपण्डितंमन्यत्वेन जडात्मि ा ाचित् प रमार्थिकशक्तिः, ि वा 'नासदासीत्'[8] इत्यादिशा ानुसारतोऽनिर्वचनीयशक्तिः? आ ऽपि न तावत् 'प्रज्ञा प्रतिष्ठा' 'ज्ञानं ब्र [9]' इति श्रुत्युक्तब्रह्मचैतन्यरूपप्रज्ञायां[10] मायात्वं संभवति; 'भूयश्चान्ते विश्वमायानिवृत्तिः'[11] 'दैवी षा गुणमयी'[12]

---

१. C : तीये
२. C : बुद्धिः
३. Śvet., VI-19.
४. C omits पि
५. C : एवं for इति; the reference is to Bṛh, II-v-19.
६. All others except Ś, C read स्व प्र त्ति
७. This word is found only in Ś.
८. Ṛgveda, X-129.
९. Ait., V-3.
१०. C : संज्ञायाः for प्रज्ञायाः
११. Śvet., I-10.
१२. Gītā., VII-14.

'म ययापहृतज्ञानाः[1]' इति शास्त्रेण मायायाः निवर्त्यत्वगुणमयत्वप्रज्ञानाव-रणत्वाभिधानात्, चैतन्यस्य तदसंभवात्। नापि 'धीः प्रज्ञा शेमुषी मतिः' इत्यभिधानोक्ताया बुद्धिरूपप्रज्ञाय मायात्वम्, बुद्धेरुपादानत्वा-योगात्। न द्वितीयः; न हि लोके मन्त्रौषधादौ मायाशब्दः प्रयुज्यते। किं तर्हि? तत्कार्ये गन्धर्वनगरादौ बाधिते। न तृतीयः, पारमार्थिकशक्तौ प्रमाणाभावात्। चतुर्थेऽपि 'अनिर्वचनीय सा माया किं जगत उपादानं किं वा जगदुत्पत्तौ कारणम्?' इति विवेक्तव्यम्। तत्र 'मायां तु प्रकृतिं विद्यात्'[3] इति श्रुतेः उपादानत्वं युक्तम्। न च प्र यते अनया इति प्रकृतिशब्दः करणे व्युत्पादनीयः; उपादाने रूढत्वात्, रूढेश्च प्राबल्यात्। 'इन्द्रो मायाभिः[4]' इति तृतीयाश्रुत्या करणत्वमिति चेत्, न; तत्रात्मनो बहुत्वापत्तावेव करणत्वश्रवणात्। तावता च प्रपञ्चोपादानत्वे । हानिः[5]? 'आत्मन आकाशः संभूतः[6]' इति पञ्च य प्रकृतित्वमात्मनः श्रूयते; ततो न माया उपादानम्; इति चेत् न; नि मित्तेऽपि पञ्चमीसंभवात्। न च मायैव निमित्तमस्त्विति वाच्यम्, जाँडयरूपेण मायायाः प्रपञ्चे अनुगतत्वात्। आत्मापि सत्तारूपेण स्फूर्तिरूपेण च अनुगतः इति चेत्, एवं तर्ह्यात्मा माया चेत्युभयं उपादानमस्तु। तथा च मायायामति-व्याप्तेन जगज्जन्मादिकारणत्वलक्षणेन विशुद्धं ब्रह्म न सिध्यति[9]।

XXXI. अत्रोच्यते। एकस्य कार्यस्य परस्परनिरपेक्षोपा-दानद्वयासंभवात् माया ब्रह्म च मिलित्वा एकमेवोपादानमिति वाच्यम्। तत्र त्रैविध्यं संभवति। रज्ज्वा संयुक्तसूत्रद्वयवत् समप्रधानभावेन उभय-मपि जगत उपादानम्। तत्र सत्तास्फूर्त्यंशयोः ब्र ण उपयोगः, जाडय-विकारांशयोस्तु मायायाः इति केचिदाहुः। 'देवात्मशक्तिम्'[11] इति

१. Gītā, VII-15.
२. Ś, C omit प्र
३. Śvet., IV-10.
४. Bṛh., II-v-19.
५. C : का नो हानिः
६. Taitt., II-i.
७. C : य्य नरूपे
८. All except C read वा
९. Ś adds इति
१०. C : ए वौपादानं
११. Śvet., I-3.

श्रुतिबलात् मायाख्या शक्तिरेव साक्षादुपादानम्। शक्तेश्च नियमेन शक्तिमत्पारतन्त्र्यात् शक्तिमति ब्रह्मण्यपि अर्थादुपादानत्वं पर्यवस्यति[1] इत्यन्ये। आरोपिताया मायाया अधिष्ठानब्रह्मस्वरूपमन्तरेण वस्तुतः स्वरूपान्तराभावात् मायाया एव साक्षादुपादानत्वेऽपि तदधिष्ठानत्वेन ब्रह्मणोऽप्युपादानत्वमवर्जनीयम्; इत्यपरे। आद्ये पक्षे मायाविशिष्ट-ब्रह्मणो मुख्योपादानत्वं; द्वितीयतृतीययोस्तु मायाया एव। पक्षत्रयेऽपि विशुद्धब्रह्मणः औपचारिकमेवोपादानत्वम्। तत्र मुख्योपादानस्य जगत्कारणत्वं स्वरूपलक्षणम्; औपचारिकोपादानस्य तु तत्तटस्थलक्षणम्। तथा सति किं स्वरूपलक्षणत्वेनाभिमतं जगत्कारणत्वं मायायामतिव्याप्तं किं वा तटस्थलक्षणत्वेन। नाद्यः; मायाया लक्ष्यान्तःपातित्वात्। न द्वितीयः, जगत्कारणत्वस्य तटस्थलक्षणरूपेण मायायामवृत्तेः। तस्मात् जगत्कारणत्वरूपतटस्थलक्षणेन ज्ञानानन्दादिस्वरूपलक्षणेन च विशुद्ध-सिद्धिः।

XXXII. ननु न तावत् पृथिव्याद्युपादानत्वं ब्रह्मलक्षणम्, पृथिव्यादीनां उत्पत्त्यदर्शनात्; नापि घटाद्युपादानत्वम्, घटादीनां पृथिव्यादिकार्यत्वात्। इति चेत्, मैवम्। विमताः पृथिव्यप्तेजोवायवः जायन्ते, पृथिव्यप्तेजोवायुबुद्धिगोचरत्वात्, संप्रतिपन्नपृथिव्यप्तेजोवायु-भागवत्। आकाशकालदिगादयो जायन्ते, विभक्तत्वात्, घटादिवत्। ननु प्रत्यनुमानमस्ति पृथिव्यादयो न जायन्ते, महाभूतत्वात्, आकाशवत्; आकाशश्च न जायते, निरवयवद्रव्यत्वात्, आत्मवत्। इति चेत्; मैवम्; सामान्यविषयान्महाभूतत्वहेतोरपि विशेषविषयस्य पृथिवीबुद्धिगोचरत्वस्य बलीयस्त्वात्। तदुक्तं भट्टाचार्यैः

बाधः सामान्यशास्त्रस्य विशेषविषयाद्यथा।
अनुमानान्तरैरेवमनुमानस्य बाधनम्॥

इति। आकाशजन्मभावानुमाने श्रुतिविरोधः; साधनविकलश्च दृष्टान्तः निर्गुणात्मनि गुणवत्त्वलक्षणस्य द्रव्यत्वस्याभावात्। तस्मात् जायमान पृथिव्यादिकृत्स्नजगदुपादानत्वं ब्रह्मलक्षणम्।

1. S: पर्यवस्थास्यति

XXXIII. ननु वादिनो जगदुपादाने विप्रतिपद्यन्ते। तथा हि। विमताः सर्वे विकाराः सुखदुःखमोहसामान्यप्रकृतिकाः, तदन्वितस्वभावत्वात्; ये यदन्वितस्वभावाः ते तत्प्रकृतिकाः, यथा मृदन्विता मृत्प्रकृतिकाः शरावादयः। तथा विमताः सर्वविकाराः अविभक्तैकप्रकृतिकाः, परिमितत्वात्, अनेकत्वात्, विकारत्वाच्च, शरावादिवत्। इति सांख्याः प्रधानं जगदुपादानमनुमिमते। विमतं कार्यद्रव्यं स्वपरिमाणात् अणुतरपरिमाणारब्धम्, कार्यद्रव्यत्वात्, पटवत्[1]; इति परमाणूंस्तद्वादिनः कल्पयन्ति। सर्वं कार्यमभावपुरःसरम्, योग्यत्वे सत्यनुपलभ्यमानपूर्वावस्थत्वात्, व्यतिरेके परपरिकल्पितात्मवत्; इति शून्यं शून्यवादिनो वदन्ति। योगाः शैवाश्च स्वकीयागमसामर्थ्यात् हिरण्यगर्भं पशुपतिं चाहुः—इति।

XXXIV. तदयुक्तम्[3], आन्तराणां सुखादीनां बाह्यानां घटादीनां च प्रत्यक्षतो भेदप्रतीतौ सुखदुःखमोहसामान्यान्वितत्वहेतोरसिद्धत्वात्। घटादिविकाराः सुखदुःखमोहात्मकाः, स्वाभिव्यञ्जकचित्तोपधौ सुखाद्याकारप्रतिभासहेतुत्वात्, यथा दर्पणोपाधौ मुखाकारप्रतिभा[4] हेतुः मुखात्मको बिम्बः, इति हेतुसिद्धिः। इति चेत्, न; तथा सत्येकमेव पदार्थमुपलभमानस्य युगपत्सुखादित्रितयोपलंभप्रसङ्गात्। अदृष्टवशादेकोपलंभ[5] इति चेत्, न; अदृष्टेन वस्तुसामर्थ्यानियमायोगात्; न ह्यदृष्टवशात् पाषाणो मृद्भवति। अदृष्टस्य वस्तुसामर्थ्यानियामकत्वेऽपि उपलम्भनियामकत्वमस्त्येव; इति चेत्, एवमपि सुखादिसामान्यान्वितत्वहेतुरनैकान्तिकः; शुक्लादिगुणैः घटत्वादिसामान्यैश्च[6] अन्वितानां द्रव्याणां तत्प्रकृतित्वादर्शनात्[7]। परिमितत्वमपि[8] वस्तुकृतं चेत्, प्रधानपुरुषयोः नित्ययोरनैकान्तिकता; देशकालकृतं चेत्, घटहिमकरकादिषु प्रत्यक्षदृष्टभिन्नप्रकृतिकेषु अनेकान्तम्। एतेनानेकत्वविकारत्वहेतू व्याख्यातौ। यै-

१. C : घटवत्
२. S : स्वक्रिय
३. S, C : तदप्ययुक्तम्
४. T : मुखाकारो
५. C : वशादे ोपलंभ
६. C omits आदि
७. C : च ? ति ?
८. C omits अपि

द्रव्यत्वं च दीर्घविस्तीर्णदुकूलद्वयारब्धे सङ्कुचिते[1] रज्जुद्रव्येऽनै ान्तिम् । अथ दुकूलद्वयसंयोगमन्तरेण रज्जुद्रव्यं नाम अन्यन्नास्ति, तथापि तत् त्यनुमानग्रस्तम् ; विमतं त्र्यणुकं सावयवारब्धम् , सावयवत ात् , घटवत् , इति हि प्रतिप्रयोगः । शून्यवादिनोऽपि घटस्य पूर्वावस्थारूपा मृत् त्यक्षोपलब्धा त्य सिद्धो हेतुः । योगशैवागमास्तु वेदविरोधादप्र णम् ।

XXXV. ननु वादिनां माणानुपपत्तावपि न प्रमेयानुपपत्तिः; न हि चक्षुरुपद्रवमात्रेण दृश्यरूपादिहानिः दृष्टा । इति चेत् , न; प्रमेयस्य प्यन्यदीयस्य[2] दुर्निरूपत्वात् । किं केवलं प्रधानादि जगत्कारणम् , उतेश्वराधिष्ठितम् ? नाद्यः, अचेतनस्य प्रतिनियतरचनानुपपत्तेः । द्वितीयेऽपि तस्येश्वरस्य श्रुतिसिद्धत्वे ब्रह्मवादप्रसङ्गः; अनुमानगम्यत्वे कुल - ल दिदृष्टान्तेनैव[3] परिच्छिन्नज्ञानशक्तित्वं स्यात् । अथ कुल लादिवत् अनेकत्वाभावात् ए स्य सर्वजगत्स्रष्टुस्तस्य सर्वज्ञत्वसर्वशक्तित्वे अर्थात् भविष्यतः । एवमपि विमतं जगत् जीवेश्वराभ्या त्पद्यते, कार्यत्वात् , घटादिवत्[4] ति अति सङ्गो दुर्वारः । अदृष्टद्वारा[5] जीवस्यापि जगत्कर्तृत्वादि ापत्तिः; इति चेत् , तर्हि घटादिवैलक्षण्याय पृथिव्यादौ कर्तृत्रयं प्रसज्येत । शून्यस्य तु निरुपाख्यत्वान्न जगदुप दानत्वसंभावनाप्यस्ति, जगतः सदन्वयात् । सदन्वयः सं[6] ति ल्पित इति चेत् , एवमपि त्वन्मते निरन्वयविनाशवतः पूर्वकल्पस्य संस्कारासंभवेन तत्स ृशो वर्तम न ल्प ति नियमो न स्यात् ; ततश्च कर्मतत्फलतत्प्रमाणव्यवहारोच्छेदः । विशि संनिवेशयुक्तदेवादिभावकामनया अनुष्ठितकर्मणां कल्पान्तरे तथाविध ेवादिरूपानुत्पत्तेः[7] कर्मोच्छेदः । अत्यन्तपु[8] यकारिण आकल्पं स्वर्गमनुभूय ल्पान्तरे पूर्वजातिस्मरणपूर्वकं जन्म श्रुतौ फलत्वेन श्रुतम् ;

---

१. Ś. C : दुकूलद्वयारब्धे हस्ते संकुचिते
२. Ś, C : दी ः
३. Ś, C : ला ादिदृ ान्तेनानुमेयत्वे तदृ ान्ते
४. C : घटवत
५. C : अप्राप्यदृ द्वारा
६. Ś, P, T, V : वृत्ति
७. C : रूपानु त्तेः
८. T : अनन्त

तत्र फलं निरन्वयविनाशे संस्काराभावान्न संभवेत्। तथा पूर्ववेदस्य निरन्वयविनाशे सति धर्मस्य मानान्तरागम्यत्वेन तद्गोचरनूतनपदरचनायाः पुरुषैः[1] कर्तुमशक्यतया धर्मप्रमाणमप्युच्छिद्येत। तदङ्गीकारे च तथैव तदभिमतकर्मतत्फलतत्प्रमाणानामप्युच्छेदः स्यात्।

XXXVI. सर्वं कार्यं स्वभावादेवोत्पद्यत इति बार्हस्पत्यो मन्यते। स प्रतिवक्तव्यः ' किं स्वयमेव स्वस्य निमित्तमित्यर्थः किं वा निर्निमित्तमुत्पद्यते ? ' इति। नाद्यः, आत्माश्रयत्वात्। द्वितीये घटस्य भावाभावौ युगपत् स्याताम्, क्रमकारिनिमित्तनिरपेक्षत्वात्। अथ मन्यसे 'त्वन्मतेऽपि तस्य निमित्तस्य क्रमकारित्वं स्वाभाविकं चेत्, स्वभाववादः, निमित्तान्तरसापेक्षत्वे अनवस्थापातः; कालभेदेन तस्यैव क्रमकार्यवस्थाङ्गीकारेऽपि स कालक्रमः स्वाभाविकश्चेत् स्वभाववादः; निमित्तान्तरापेक्षश्चेत् अनवस्था ' इति। तदसत्। किमनेनानवस्थापादनेन वस्तूनां सामर्थ्यस्य निमित्तान्तरनिरपेक्षत्वमुच्यते, किं वा सति वस्तूनां सामर्थ्ये निमित्तान्तरानुसरणं व्यर्थमिति ? आद्योऽङ्गीकृत एव। द्वितीयेऽपि किं[2] निमित्तान्तरापेक्षत्वं न प्रतीयत इत्युच्यते, किं वा प्रतीतमपि दुर्निरूपं इति ? नाद्यः, प्रत्यक्षविरोधात्; घटमारभमाणस्य कुम्भकारस्य दण्डचक्राद्यपेक्षायाः प्रत्यक्षसिद्धत्वात्। न द्वितीयः, सर्वानिर्वाच्यत्ववादिनो दुर्निरूपत्वस्य अलङ्कारत्वात्। भूतचतुष्टयमेव तत्त्वम्, प्रत्यक्षमेवैकं प्रमाणम्, स्वभाववाद एव[3] पारमार्थिकः इति मन्यमानस्य तत्र प्रतिज्ञार्थे हेतूपन्यासे सनिमित्तत्वप्रसङ्गः; अनुपन्यासे च प्रतिज्ञातार्थासिद्धिः। प्रतीतिमात्रशरणत्वे च अनिर्वचनीयवादापातः।[4]

XXXVII. तदेवं वस्त्वन्तरस्य कारणत्वसंभावनानिराकरणे पारिशेष्यादस्मदुक्तः सर्वज्ञः सर्वशक्तिरीश्वर एव कारणम्; इत्येतदृशी युक्तिरपि ब्रह्मस्वरूपनिर्णयाय अनेनैव सूत्रेण तन्त्रेणावृत्त्या वा सूत्रिता

1. S omits
2. C omits एव
3. C : त्र.
4. C : शरणत्वेनानिर्वचनीय

ति द्रष्टव्यम् । अनया च युक्त्या यथोक्तब्रह्मसंभावनायां पश्चादागमेन तत्साधयि शक्यम् । यथाहुः—

संभ वितः तिज्ञ यां पक्षः साध्येत हेतुना ।
न तस्य हेतुभिः त्राणं उत्प न्नेव यो हतः ॥

ति ।

XXXVIII. नन्वनु ानादेव यथोक्तेश्वर सिद्धौ किमाभ्यां युक्त्यागमाभ्याम् ? न च सत्यागमे अनुमान यासवैयर्थ्यमि ति व च्यम्, 'यतो वा' इत्याद्यागमस्य अनुमानसिद्ध र्थानुवादकत्वात् । अनुम नं चैवं प्रयोज्यम् 'विमतं जगत् उपादानोपकरणाद्यखिलाभिज्ञकर्तृकम्, ार्यत्वात्, गृहवत्' । इ ति वैशेषि रुच्यते । इति चेत् न; विमतं जगत् बहुकर्तृ असर्वज्ञकर्तृकं व इत्यति सङ्गस्यापि तद्वत्सुसाधत्वात् । ज्ञानैश्वर्यशक्तय त्कृष्यमाणाः क्वचित् पर्यवसिताः, उत्कृष्यम णधर्मत्वात्, परिमाणवत्, ति सांख्या योगाश्च वदन्ति । इति चेत्, न; निरीश्वर-ादिनां[3] देव दिभिः सिद्धस धनत्वात् । सर्ववि यज्ञानैश्वर्यशक्तिमति पर्यसितत्वसाधनेऽपि गुरुत्वरागद्वेषदुःखादिषु अनै ानि कता । पु यप पफलं र्म तत्फल खिलाभिज्ञेन दीयते, र्मफलत्व त्, सेव फलवत्; इति नैयायि । अनु मिमते । इ ति चेत्, न; देवादिभिरेव सिद्धसाधनत्वात् ।

XXXIX. अतः संभावनाबुद्धिहेतुत्वेन आगमोपकारिणीमस -दुक्तां युक्तिमेवाज्ञानात् वैशेषिकादयोऽनुमानं मन्यन्ते । न हि युक्तिरेवानुम नम् । व्याप्त्याभासोऽनुपपत्त्याभास उदाहरणमात्रदर्शनं चेत्येतत्त्रयं संभावनाबुद्धिजनकत्वेन युक्तिरित्युच्यते ; अव्यभिचरितव्याप्तिकमर्थनिश्चायकमनु ानम् । अतो वैशेषि ादि योगाणां सत्य-

---

१. C : थान्:
२. C : इत्यर ; the reference i to Taitt., III-i
३. Ś : ादि ।
, All except Ś, C read
ला भि
५. C : वादि
६. T omits इति after
७. C :

ध्यनुम नदोषे श्रुतिसिद्ध ह्मणि संभ वनाबुद्धिहेतुत्वेन अस्मदुक्तयुक्ति-स्त्वमविरुद्धम् । एवं तर्हि युक्तिव्याजेन वैशेषि ाद्यभिमतमनु-नमेव जन्मादिसूत्रे ब्रह्मनिश्च यकत्वेनोपन्यस्तम्; इति चेत्, न[1]; अनु-नमात्र त् कारणसद्भावमात्रसिद्धावपि सत्य ानादिरूपस्य ब्र ण आगम-मन्तरेणा सिद्धेः आगम थन ए सूत्रतात्पर्यात् । आगमवा यानि हि वक्ष्यमाणसूत्रैः उदाहृत्य तात्पर्यतो निर्णीयन्ते; ब्र साक्षात्कारस्य शब्दा[3]-नुसा रिभिः न्यायैः ब्र णि वेदान्तवाक्यतात्पर्यनिर्णयाधीनत्वात् । न ह्यनुमानादिप्रमाणान्तरनिर्णे [6] ं वैशेषिक दीनां ब्र ावगतिर्दृश्यते । न चापौरुषेयस्यागमस्य[4] पौरुषेयमनुमानं मूलमिति[5] युक्तम् । न चैवमनु-मानस्यात्यन्तानपेक्षा[6] स्यादि ति वाच्यम्; श्रुत्यर्थदाढर्याय श्रुत्यविरोध्यनु-मानस्य[7] अपेक्षितत्वात् । 'पण्डितो मेधावी[8]' त्यादिश्रुत्यैवागमस्य पुरु-षबुद्धिसाहाय्यमङ्गीक्रियते । अन्यथा अध्ययनादेव ावगतौ 'आचार्य-वान् पुरुषो वेद[9]' इत्युक्तो गुरूपदेशनियमो व्यर्थः स्यात् । आचार्यो हि श्रुत्यनुसारिभिः [7] न्तैः शिष्येभ्यः प्रत्ययदा र्य त्पादयति । प्रत्ययदाढर्यं मननरूपत्वादवगतिहेतुः । एतदेव हि मननं यदाचार्य-युक्त्या स्वयुक्त्या च श्रौतप्रत्ययस्य दाढर्यापादनम् । मननस्य चावगति-हेतुत्वं 'मन्तव्यः[10]' इति श्रुत्या सिद्धम् ।

XL. ननु धर्मजिज्ञासायां वेदस्मृतीतिहासपुराणान्येव माणम् नानु ानादि । तत्रापि श्रुतिलिङ्गवाक्यप्र रणस्थानसमाख्या निर्णय-हेतवः । पदान्तरनिरपेक्षः शब्दः श्रुतिः । श्रौतस्यार्थस्यार्थान्तरेणाविना-भावो लिङ्गम् । अन्योन्याक ङ्क्षासंनिधियोग्यतावन्ति पदानि वाक्यम् । वाक्यद्वयसामर्थ्यमारभ्याधीतविषयं रणम् । क्रमवर्तिनां पदार्थानां

---

१. न is inserted by Ś and C only
२. C : ार ात्र
३. C : शब्द व्स्य ारिभिः
४. P, T, V omit आग स्य
५. Ś : इत्युक्तम्
६. C : ६ = ानप
७. Ś, C read अ नः ; others give न्या ः
८. Chānd., VI-xiv-2
९. Chānd., VI-xiv-2
१०. Bṛh., II-iv-5

क्रमवर्तिभिः पदार्थैः यथाक्रमं स बन्धः स्थानम्। संज्ञासा यं समाख्या। तैरेव निर्णयोऽप्यस्तु। ति चेत्, न; युक्त्यनुभवयोरपि ब्रह्मजिज्ञासायामपेक्षितत्वात्। युक्त्यपेक्षा पूर्वमेव प्रसाधिता। अनुभवो नाम [2]साक्षात् रफलकोऽन्तः रण त्तिभेदः। न च तमन्तरेण ज्ञाना ङ्क्षा निवर्तते। न च ब्रह्मस्वरूपमनुभवितुमयोग्यमिति शङ्कनीयम्, घटादिवत् सिद्धवस्तुत्वात्। विमतं ब्र व यमनुभवनिरपेक्षफलपर्यन्तज्ञानजनकम्, माणभूतवेदवाक्यत्वात्, धर्मवाक्यवत्[3]; इति चेत्, न; अनुभवायोग्यविषयत्वोपाधिहतत्वात्; न ह्यनुष्ठानसाध्यो धर्मोऽनुष्ठानात् पूर्वं वाक्यबोधावसरे अनुभवितुं योग्यः। अनुष्ठानं तु विनाप्यनुभवं शाब्दज्ञानमात्रादेव सिध्यति इत्यनपेक्षित एव धर्मानुभवः।

XLI. ननु अनुभवयोग्यत्वानुभवसापेक्षत्वाभ्यां विना ब्रह्मणो धर्मेण सह वैष यान्तरं नास्ति; प्रत्युत वेद मेयत्वं सममेव; ततोऽनुभवकृतवैषम्यमपि मा भूत्; इति चेत्, न; धर्मब्रह्मणोः कर्तव्यसिद्धयोः पुरुषाधीनत्वानधीनत्वादिभूयोवैषम्यसंभवात्। लोके तावत् देवदत्तोऽश्वेन गच्छति न वा[4] गच्छति पद्भ्यां वा गच्छति इति कर्तव्यस्य गमनस्य करणाकरणान्यथाकरणेषु[5] पुरुषाधीनत्वं दृश्यते। तथा वेदेऽपि 'अतिरात्रे षोडशिनं गृह्णाति', 'नातिरात्रे षोडशिनं गृह्णाति', इति करणाकरणे श्रूयेते; 'उदिते जुहोति' 'अनुदिते जुहोति' इति करणान्यथाकरणे; 'ज्योतिष्टोमेन यजेत', 'न कलञ्जं भक्षयेत्' इति विधिप्रतिषेधौ; 'व्रीहिभिर्यजेत', 'यवैर्वा' इतीच्छाविकल्पः; षड्यागानां समुच्चयः; 'न हिंस्यात्सर्वा भूतानि', 'अग्नीषोमीयं पशुमालभेत' इत्युत्सर्गापवादौ; प्रकृतेरतिदि नां शमयबर्हिषां विकृतावुपदि शरमयबर्हिभिः ब धः; प्राकृ नां नारि होमानां वैकृतैः उपहोमैः स चित्यानुष्ठानमभ्युच्चयः, 'उदिते जुहोति', 'अनुदिते जुहोति' इति शाखाभेदेन व्यवस्थितविकल्पः। न

---

१. Ś, C insert प्र णैः
२. Ś omits
३. C : धर्मवेद वेद्य
४. Ś, C : वा; others read च
५. C adds अपि

चैवं सिद्धे ब्र णि पुरुषाधीनत्वविधिप्रतिषेधे ाविकल्पस चयोत्सर्गापवाद-बाधाभ्युच्चयव्यवस्थित विकल्पादयः संभवेयुः। सिद्धवस्तुन्यपि 'स्थाणुर्वा पुरुषो वा' इति विकल्पोऽस्तीति चेत्, न; पुरुषेच्छाधीनावस्तुतन्त्रस्य तस्य अस यक्त्वात्। 'योषा वा व गोतमाग्निः'[1] इत्यादौ पुरुषे ा-धीनमवस्तुतन्त्रमेव ध्य नमागमिकं स यगुपलभ्यते; इति चेत्, न; तस्य कर्तव्यगोचरत्वात्। अथापि[2] सिद्धवस्तुनः स यग्ज्ञान धीनत्वात् स यग्-ज्ञानस्य च प्रमातृपुरुषेच्छाधीनत्वात् वस्त्वपि पुरुषाधीनं भविष्यति; इति चेत्, न; सत्यामपि पुरुषेच्छायां 'इदं रजतम्' इत्यत्र वस्त्वभावे स यग्ज्ञानादर्शनात्; [व्य ग्रादौ च वैपरीत्यात्।[3]] तस्मात् सिद्धगो-चरसम्यग्ज्ञानस्य वस्त्वेव प्रधानं प्रयोजकम्। तवैवं सति सिद्धगोचरं ब्रह्मज्ञानमपि[4] वस्तुतन्त्रमेव इति न ज्ञानद्वारा पि ब्रह्मणः पुरुषाधीनत्वम्। अतो धर्मादत्यन्तं विलक्षणस्य सिद्धस्य[5] ब्रह्मणो युक्ता युक्त्यनु-भव पेक्ष ।

XLII. ननु ब्र णः सिद्धवस्तुत्वेन घटादिवन्[6]मानान्तरगोचर-त्व त् जन्मादिसूत्रमनुमानोपन्यासार्थमेव अस्तु; इति चेत्, मैवम्। न तावत् ब्र वेदान्तानभिज्ञ त्यक्षग यम्; रूपादिहीनत्व त्। अनुमान-म पि किं यत् कार्यं तत् सकारणम् इति सामान्यव्याप्तिकम्, उत यत् कार्यं तद्ब्र कारणकम् इति विशेषव्याप्तिकम्? नाद्यः, तावत ब्र सिद्धेः। द्वितीयेऽपि ब्र ण इन्द्रियविषयत्वे अनुम नवैयर्थ्यम्; तदविषयत्वे व्याप्ति ह्यसिद्धिः।

XLIII. नन्वेवं सति अनुमानच्छायोपजीवियुक्तीनामपि ब्र गोचरो न स्यात्। सत्यमेवम्। तथापि शब्दावग ये[7] ब्र णि संभ व-न बुद्धिहेतवो युक्तयः। तथा हि। मृदादिदृ न्तैः उपाद नव्यतिरेकेण

1. Chānd., V-viii-1
2. T, C : थापि
3. T omits the words in brackets
4. C omits अपि
5. C omits सिद्धस्य
6. Ś, C omit आदि
7. C : ब्दावगते

ार्यस्यानिरूपणात् अद्वितीयता संभाव्यते ; स्फटिकलौहित्यदृष्टान्तेनात्मनि तृत्व देरारोपितत्वम् ; प्रतिबिम्बदृष्ट न्तेन जीव क्यम् ; रज्जुसर्पदृष्टान्तेन ब्रह्मव्यतिरिक्तप्रप स्य स्वातन्त्र्याभावः; घट श॰ न्तेन असङ्गताद्वारेण विशुद्धाद्वितीयप्रत्यगात्मता ; त परशुदृष्टान्तेन जीवब्रह्मैक्यसत्यता । तथा च विधि तिषेधवाक्ययोः प्रवर्तकत्वनिवर्त त्वाकांक्षितस्तुतिनिन्दार्थवादवत् स्वरूपवाक्यस्य फलपर्यन्ततापेक्षितसंभवनार्थवादतां श्रुत्युक्तयुक्तयः प्रतिपद्यन्ते ; अन्यथा निरर्थकास्ताः स्युः । तस्मात् उपकार युक्तिसूचनापूर्वकं वेदा वाक्यप्रदर्शनार्थमेव सूत्रम् ।

XLIV. ननु सर्वत्र वेदवाक्ये ब्रह्मपदस्य अप्रसिद्धार्थत्वात् न तत्पदं स्वार्थं विशेष्यत्वेन विशेषणत्वेन वा वाक्य र्थे समर्पयितु लम्; ततः ि तत् वेदान्तवा यम् यत् सूत्रे[2] लिलक्षयिषितम् ? ति । उच्यते । सत्यज्ञानानन्त नन्दप्रत्यगात्मस्वरूपस्य ब्र पदार्थस्या सिद्धाव पि त्वम त्रस्य बृहत्यर्थरूपस्य सिद्धत्वात् तदनुव देन सत्यादिपदार्थपरस्परान्वयसामर्थ्यात् विशि ब्र प्रतिपत्तुं शक्यते ; इ ति लक्षणरूपेण ह्मस्वरूपप्रतिपादनपरं सत्यादिवा यम् । न च माण न्तरसिद्धस्य लक्षणत्वात् सत्यादीनामपि लक्षणत्वे तद्व यस्य प्रमाणान्तर सिद्ध र्थानुवादकत्वप्रसङ्ग इति वाच्यम् ; अर्था क्षणत्वेऽपि मानान्तरानवगत ोधकत्वेन साक्षात्प्रमाणरूपत्वात् । वाक्यं तु 'यस्मादाकाशः संभूतः स आत्मा', 'सत्यं ज्ञानमनन्तं '. इत्येवं स्वाध्य यपा ममुल्लंघ्य योजनीयम् ; प्रसिद्धस्य रणत्वस्यानुवाद्यत्वात्, सिद्धमनूद्य प्रसिद्धं प्रतिपाद्यत ति न्यायात् । अन्यान्यप्युपनि द्व क्यानि एवं ह्मप्रति ाद त्वे योजनीयानि । तत्रैवं सति 'भृगुर्वै व रुणिः'[3] इत्य रभ्य 'द ' इत्येतदन्तं वा यं सूत्रद्वयस्योदा रणम् । तत्रापि 'भृगुः' इत्यादि 'तद्विजि ासस्व' इत्येतच्च थमसूत्रस्य, तत्सूत्रप्रतिप योः अधिक र

१. All others except Ś, C r ad ुत्यु यः
२. Ś inserts पि ,
३. Taitt., III-i-1
४. Ś : विज्ञाय

निर्णयज्ञान तदन्यतयोः तस्मिन्नुदाहरणेऽनुगमात्; ' द्विजिज्ञासस्व ' इत्येतद्विहाय ' यतो वा ' इत्यादि ' तद् ब्र ' इत्यन्तं वाक्यं द्वितीयसूत्रोदाहरणम्, तयोः सूत्रवाक्ययोरर्थैक्यानुगमात्।

XLV. ननु जगत्कारणे नानात्वस्यापि प्रतीतिरस्ति, यतः इति तसिल्प्रत्ययस्य बहुत्वैकत्वयोः स्मरणात्[2]; तथ च तदनुवादेन कथमद्वितीयं ब्र ात्र प्रतिपादनीयम्? ति। उच्यते। ' येन जातानि ' इति वाक्यशेषात् एकत्वविषय एव तसिल्प्रत्ययो निर्धार्यते; स च प्रत्ययः कारणैकत्वं प्रमापयति। यद्यपि 'यतः' इत्यत्र तिपादकार्थस्य जगत रणमात्रस्य अनुमानतोऽपि सिद्धेरनुवाद्यत्वम्, तथापि प्रत्ययार्थस्यैकत्वस्य मानान्तरासिद्धेः प्रत्ययस्य प्रमापकत मविरुद्धम्। ननु किमेकत्व त्र लक्षणं किं वा लक्ष्यं उतान्यत् ि त्? आद्ये[3] ारणत्वमेकत्वं चेति लक्षणद्वयं ब्रह्मणो व्यर्थं स्य त्। द्वितीयतृतीययोस्तु व क्यभेद सङ्गः, एकत्वब्र ख्ययोर्द्वयोः प्रतिपाद्यत त्। इति चेत्, मैवम्। आद्ये कारणत्वं तटस्थलक्षणं एकत्वं स्वरूपलक्षणं च इत्युभयोः स र्थकत्वम्। द्वितीये ारणमनूद्य एकत्व विशि विधीयत इति न व क्यभेदः। तृतीये तु यत्कारणं तदेकमिति प्रथमं ारणमनूद्यैकत्वं विधाय पश्चात् यदेकं ारणं त् ब्र इति कारणमेकत्वसहितमनूद्य त्वं बोध्य इति वाक्यैकवा यत्व त् न वाक्यभेदः। तथा च सर्वजगत ारणस्यैकत्वे सृज्यगोचरज्ञानशक्ती[4] विहाय स्रष्टृत्वासंभव त् सर्वज्ञत्वसर्वश क्तित्वे अप्यस्मिन्नेव वाक्ये कारणस्य र्थात् सिध्यतः। ननु यो गोसदृशः स गवयशब्दवाच्यः इतिवत् 'यदेकं कारणं तत् शब्दवाच्यम्' इति सं ासं ि सम्बन्धपरं वाक्यं प्रतिभाति; तथ सति बृहत्यर्थरूपवस्तु तिपादकं न स्यात्। इति चेत्, न; 'तद्विजि सस्व' इति जिज्ञास्यत्वेन तिज्ञाय ' ीदृशं तत्?' इत्याकांक्षायां तद् बृहत्यर्थरूपं इति स्वरूपप्रतिपादनात्। संज्ञासंज्ञिसम्बन्धस्तु आर्थिको

---

१. Ś: वि ाय
२. Ś: ारण्यात्
३. T: आदौ
४. Ś: क्तीः

भविष्यति । एवं च सति एकं सर्वज्ञं सर्वशक्ति[1] सर्वतोऽनवच्छि न्नं चै जगत रणम्, तच्च ब्रह्मशब्दाभिधेयं इति वाक्यार्थः संपद्यते ।

XLVI (a). ननु निरुपाधिकस्वरूपकथनमन्तरेण [2]सोपाधि- ानां सर्वज्ञत्वादीनां धर्मी न प्रतीयते; ततो[3] 'यत्सुषिरं तदा ाशम्' 'प्रकृष्टप्रकाशश्चन्द्रः' इतिवत् स्वरूपलक्षणमेव श्रुत्या किं द्वक्तव्यम् । ब्र शब्दाभिधेयमेव स्वरूपलक्षणमिति चेत्, न; बृहत्त्वधर्ममात्राभिधा- नात् । यथा 'महान् घटः' त्युक्ते महत्त्वस्य निरुपाधिः घटो धर्मितयै प्रतीयते, तथेहापि वक्तव्यम् । सच्छब्दाभिधेयं लक्षणमिति चेत्, न; महासामान्यमात्राभिधानात् । यथा सन्नित्युक्ते घट इत्यवान्तरसामान्य- व्यक्तिः महासामान्यपर्यवसानत्वेनापेक्ष्यते, तथेहापि अवान्तरसाम न्य- व्य क्तिर्वक्तव्या । ज्ञानमेव बृहत्त्वसर्वज्ञत्वादिधर्मवत्तया निरुपाधिक - स्वरूपलक्षणमिति चेत्, न; वेदान्तिमते विज्ञानत्वस्य सुखदुःखरागद्वेषा- पेक्षया मह साम न्यरूपत्वेन तत्राप्यवान्तरसामान्याधारव्यक्त्यपेक्षाय अनिवर्तनात् इति ।

XLVI (b). अत्रोच्यते । 'आनन्दाद्ध्येव खलु'[8] इति श्रुत्या आनन्द एव [9]निरुपाधि रूपं[10]मिति निर्णीयते । श्रुत्यन्तरं च 'यो वै भूम तत्सुखम्'[11] इति सुखस्यैव ब्र धर्मत्वमाह ।

---

१. C omits
२. All e cept Ś read गेपाधि- कता वेज्ञत्वादयो धर्मा न तीयन्ते । But the reading as found in Ś and accepted in the text above agrees with the Vivaraṇa.
३. All except Ś read यतो
४. C : धर्मि ा ा
५. All mss. but Ś and C insert ननु, which is unnecessary. The reading adopted in the text is that of C. Other mss. read यथा सन्नित्युक्ते ट इत्य- ान्त र ा ान्य व्यक्तिरपर्यवसानत्वेन हा ा ान्येनापेक्ष्यते थेहापि; Ś: महासा ान्येऽपेक्ष्यते
६. Ś, C : विज्ञानस्य
७. Ś, C : थापि
८. Taitt, III-vi-2.
९. Ś : नि पाधिक
१०. T : र रूप
११. Ch¯nd., VII-xxiii-1.

XLVI (c). एवं हि 'विज्ञानमानन्दम्'[१] इति सामानाधिकरण्यात् विज्ञानं निरुपाधिकं[२] ब्रह्मगुणः स्यात्; इति चेत्, तत्र वक्तव्यं किं विज्ञानानन्दयोः सामानाधिकरण्यं नीलोत्पलादिवत् गुणगुणिभावविवक्षया, किं वा 'द्रव्यं घटः' इतिवत् परापरसामान्यभावविवक्षया? नाद्यः, 'केवलो निर्गुणश्च'[३] इति श्रुतेः। गुणस्य गुणिन भेदाभेदयोरनिरूपणात् उपपन्नं निर्गुणत्वम्। अत्र भेदाभेदवादी[४] 'निर्गुणं न द्रव्यमस्ति' इति जल्पति। मा भून्निर्गुणं द्रव्यम्; ब्रह्म तु न द्रव्यम्, प्रमाणाभावात्। समवायिकारणत्वात् द्रव्यमिति चेत्, न; आरंभवादानभ्युपगमात्। उपादानकारणत्वात् द्रव्यमिति चेत्, न; गुणादीनामपि स्वगतज्ञेयत्ववाच्यत्वादिधर्मोपादानत्वात्। गुणो नाम धर्मः; तथा च न निर्धर्मकः पदार्थोऽस्ति; इति चेत्, न; कस्यचित् धर्मस्यैव निर्धर्मकस्य अङ्गीकार्यत्वात्, अन्यथा अनवस्थापत्तेः। तस्मात् 'न निर्गुणं द्रव्यम्' इति वचनं तत्त्वदर्शनप्रद्वेषमात्रम्। द्वितीयपक्षोऽप्यङ्गीकृत एव। विज्ञानं सामान्यपरम्; तद्विशेष आनन्दः; स एव हि ब्रह्म। न च सर्वज्ञत्वाद्वितीयत्वादिधर्मैः सद्वितीयत्वम्; पञ्चोपाधिकतया तेषामनिर्वचनीयत्वात्। विज्ञानसामान्यमपि दुःखरागाद्युपाधिकत्वात् अनिर्वचनीयमेव। तादृशसामान्याधारे विज्ञानप्रयुक्तार्थक्रियाकारिण्यानन्दे[६] विज्ञानव्यवहारोऽप्युपपन्न[५] एव। ननु यथा कल्पितरजतत्वाधारभूतायां शुक्तौ आरोप्यो रजतव्यवहारः, तथा आनन्दे विज्ञानव्यवहारः स्यात्। इति चेत्, न; तद्वदत्र पारमार्थिकसामान्यान्तराभावेन वैषम्यात्। तदेवं विज्ञानस्वभाव आनन्दो ब्रह्म; इति स्वरूपलक्षणस्य श्रौतत्वात् अशेषमतिमङ्गलम्।

इति पञ्चमवर्णकम्

द्वितीयसूत्रं समाप्तम्।

---

१. Bṛh., III-ix-28.
२. C omits निरुपाधि
३. Śvet., VI-11.
४. All except C: 'न निर्गुणं द्रव्यम्'
५. All except Ś and C omit प
६. This is the reading in Ś and C; other read: प्रयुक्ताक्रियाकारिण्यानन्दे

## षष्ठवर्णकम्

I. द्वितीयसूत्रे ब्र णो लक्षणद्वयमभिहितम् । इदानीं सूत्र रेण ह्मणः सर्वज्ञत्वे हे रुच्यते शास्त्रयोनित्वात् इति ।

II. पूर्वसूत्र एव श्रुतियुक्तिभ्यां सर्वज्ञत्वसाधनात् व्यर्थमेतत् ; ति चेत् , मैवम् ।

शब्दोपादानभावात् ध्वनिगतविषयद्योतनाशक्तयोर्न्ते-
ब्रह्मण्येव स्युरग्नेर्विषयविषयिणी दीपशक्तिः खलूच्चैः ।
द्रष्टुश्च ज्ञानशक्तिर्ननु न करणता किं तु दीपप्रभावत्
संयुक्तद्योतनैवेत्यपरमिह पुनः स ध्यते सर्वविच्त्वम् ॥

अय र्थः । साधितमपि पुनः हेत्वन्तरेण दृढीक्रियते । न च नर्रा ज्ञः; जैगत तुरपि वेदा तृत्वशङ्कया आक्षि सर्वज्ञत्वे समाधीयमानत्वात् । विमतं वेदगतसर्वविषयप्रकाशनशक्त्याधारः, वेदोप दानत्वात् , यथा दीपगतप्रकाशनश त्याध रो दीपोप द न-भू तोऽग्निः, इति हि प्रयोगः । यद्यपि वेदे रणशक्तिरप्यस्ति, तथापि चेतनत्वात् णो ज्ञ नशक्तिरेवानुमेया । न हि चेतनस्य कर्तुः करण-शक्तिः संभाव्यते । न चोपादानोपादेययोः सर्वशक्त्यनुगत्य भाव्य-मिति नियमोऽस्ति ; अग्निकार्यभूत यां भ यां ाशश तेरेवानुगमात्, दाहशक्तेरननुगमात् । एवं वेदोपादानेऽपि ब्र णि बोधशक्तिरेवानुग-च्छ ; को विरोधः? इति ।

III. न च वेदस्य सर्व ाश त्वे विवदितव्यम् ; पुराणाद्य-नेकविद्योपबृंहितेन वेदेनाविषयी तस्य वस्तुनः सत्त्वे म नाभ वात् । न च वेदोप द नत्वमसिद्धम् ; वेदस्य नाम प न्तःपातित ात् , न मरूप-ोपादानत्वस्य च णि वोप नि त्सिद्धत्वात् । ननु न

---

१. ऽ : मूः    २. ऽ : गत रपि विशे तृ ङ्क ।

वेदोपादानम्, वेदोक्त खिलाभिज्ञत्वात्, ऋष्य दिवत्; इति चेत्, न; वेदोक्तमात्र भिज्ञत्वस्योपाधित्वात्। तु वेदोक्तादप्यधि जानाति। तथा हि। वेदः स्वविषयादप्यधि विषयविज्ञानवत् णीतः, वाक्यप्रमाणत्वात्, पाणि निप्रणीतशास्त्रवत्। संभाव्यते ह्येतत्साध्यम्, लोके वागविषयस्यापि क्षीरगुडादिम धुर्य विशेषस्य अनुभवग यत्वात्। तथा च वेदस्य व्यवहार्यसर्ववस्तुप्रकाशकत्वात् सर्वज्ञत्वम्। वेदोपादानं ब्र तु व्यवहार तीतं निजस्वरूपमपि स्वचैतन्येन अभिव्यनक्ती ति निरतिशयसर्वज्ञम्। अथ वेदोऽपि ब्रह्मस्वरूपं लक्षणया काशयेत् तथापि वेदः किञ्चिन् ख्ययैव वृत्त्या प्रक शयति, किञ्चित् लक्षणया, किञ्चित्सामान्येन किञ्चिद्विशेषेण। ब्रह्म तु सर्वं सर्वात्मना प्र शयतीति वेदादप्यधिकाभिज्ञमेव।

IV. ननु वेदस्य ब्र णा णयनं नाम उच्चारणमात्रं चेत्, उप ध्य यवत् ब्रह्म असर्वज्ञं स्य त्; अर्थं बुद्ध्वा रचितत्वे व्याकरणादिवद्वेदः पौरुषेयः स्यात्। अथ मन्यसे ' माणान्तरेणार्थ पलभ्य विवक्षित्वा रचिता व्याकरणाद्यो मानान्तरसापेक्षतया पौरुषेया भवन्तु नाम; वेदस्य तु नित्यज्ञानजन्यनित्येच्छावता ईश्वरेण रचितस्य म नान्तरनिरपेक्षस्य कथं पौरुषेयत्वम्?' इति। नैतत्सारम्; तादृगीश्वरे माणाभावात्; अनुमानानां ईश्वरासाधकत्वस्य पूर्वसूत्रे दर्शितत्वात्। आगमस्तत्साधक ति चेत्, न; उक्तेश्वरसिद्धौ तत्प्रोक्तागमप्रामाण्यसिद्धिः, तत्सिद्धौ च उक्तेश्वरसिद्धिः इत्यन्योन्याश्रयत्वात्। वेदस्यानपेक्षत्वादेव प्रामा यम्, न ईश्वरप्रोक्तत्वात्, अतो नेतरेतराश्रयः; इति चेत्, एवमपीश्वरेच्छा नित्या ज्ञानजन्या चेति व्याहतिर्दुष्परिहरा। अथ अर्थं बुद्ध्वा रचितत्वे समेऽपि व्याकरणादीनां वक्त्रभिप्रायप्रयुक्तत्वात् पौरुषेयत्वम्; वेदानां तु अध्ययनविधिप्रयुक्तत्वादपौरुषेयता। इति चेत्, नः वि ता

---

१. This is the reading as found in Ś. Others give वि यविज्ञानादप्यधि वि वत् ती:

२. C omits न्य

३. C : आ यात्

वेदा वक्त्रभिप्रायप्रयुक्ताः, नाध्ययनविधि युक्ताः, अर्थं बुद्‌ध्वा रचितत्वात्, व्याकरणादिवत् इति पौरुषेयताया दुर्वारत्वात् । न च वेदानां चैतन्याख्य निर्विकल्पकज्ञानपूर्वकत्वं व्याकरणादिवैष यमिति वाच्यम् ; चैतन्यस्याप्यभिलषितसाधनोपरागे सविकल्पकत्वात् ।

V. नन्वपौरुषेया वेदाः, वाहाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वात्, आत्मवत्; इति चेत्, किमत्र स्मरणागोचर र्तृकत्वं हेतुः उत अप्रमीयमाणकर्तृ त्वम्? आद्यो जीर्णकूपाद वनैकान्तिकः । द्वितीयोऽसिद्धः । वेदो विशिष्टबहुज्ञपुरुषप्रणीतः, बह्वर्थविषयवाक्यप्रमाणत्वात्, भारतवत्; 'इदं[2] सर्वमसृजत ऋचो यजूँषि सामानि' इत्यनुमानागमाभ्यां वेदे कर्तुः मीयमाणत्वात् । एवं तर्हि वेदस्य पौरुषेयत्वप्रसङ्ग इष्टः; इति चेत्, न; प्रामाण्यभङ्गप्रसङ्गात् । न तावत् नित्येच्छादिमदीश्वररचितत्वात् प्रामाण्यम्, दूषितत्वात् । नापि महाजनपरिग्रहात्, देहात्मभावचन्द्र दिशमात्रत्वादीनां महाजनपरिगृहीतानामेव अप्राम यदर्शनात्[3] । स्मृतिपुराणपित्रादिवाक्यवत् अर्थस्य मानान्तरसिद्धतया प्रामाण्यं स्यादिति चेत्, मैवम्[4] । किं वेद र्थभूतौ धर्माधर्मौ प्रत्यक्षेण गम्यौ[5] उतागमान्तरेण? न चरमः, अनवस्थानात् । प्रथमेऽपि न हि तावदस्मदादिप्रत्यक्षेण धर्माधर्मावुपलभामहे[6] । नापि योगिप्रत्यक्षं तद्ग्राहकम्, तस्य स्वविषयरूपादिष्वेव अतिशय त्त्वात्[7] । न चात्मसमवेततया धर्माधर्मौ मानसप्रत्यक्षाविति वाच्यम्; वेदसृष्टिकाले धर्माधर्मयोः भाविनोः अवर्तमानत्वात् । पूर्वकल्पानुष्ठितौ धर्माधर्मौ तदा वर्तेते एव; इति चेत्, न; पूर्ववेदसृष्टावपि तथेत्यनवस्थायां अन्धपर पराप्रसङ्गात् । तस्मात् पौरुषेयत्वे वेदस्य प्रामाण्यं दुःसंपादम् । अत एव सुगता आर्हताश्च अ माणं वेदमाहुः; इति चेत्, न; तेषां स्वस्वागमेषु अप्रा-

---

१. C omits अपि
२. C inserts
३. Ś : प्रा ण्यादर्शनात्
४. C : न
५. Ś, C : त्यक्षे गम्यौ; others read प्रत्यक्षे ानुभूतौ
६. C omits धर्म
७. Ś : ति य त्त्वात्
८. All e cept Ś, C omit one र.

माण्यप्रसङ्गात् । अत एव लोकायत आगममात्रं नेच्छति ; इति चेत् , न; तस्य वाक्यमात्राप्रामाण्ये वादानधिकारः; लौकिकवाक्यप्रामाण्ये किमपराद्धं वेदवाक्यैः? तदेवं पौरुषेयत्वे वेदस्य इष्टं प्रामाण्यं [1]प्रभज्येत; अपौरुषेयत्वे ब्रह्मण उपाध्यायवत् असर्वज्ञत्वं[2] प्रसज्येत इति ।

VI. अत्रोच्यते । पौरुषेयत्वं तावन्न सहामहे । तथा हि । किं[3] शब्दार्थतत्स बन्ध नां पौरुषेयत्वं उत क्रमावस्थितवाक्यानाम्? आद्येऽपि न तावत् जीवाः कर्तारः; तथा सति कश्चित् सागरं विवक्षित्वा मेरुशब्दमपि वाचकत्वेन प्रयुञ्जीत, स्वतन्त्रत्वात् । नापीश्वरः कर्ता; ल्पादिषु शब्दार्थस न्धव्यवहारः पूर्वपूर्वव्यवहारपरम्पराधीनः, अभिधानाभिधेयव्यवहारत्वात् , इदानींतनश[4]ब्दव्यवहारवत् इत्यनादित्वानुमानात् । न च डित्थादिसाङ्केतिकशब्देष्वनेकान्तः, तेषां गाव्यादिशब्दवत् अभिधानाभासत्वात् । न द्वितीयः; सृष्टिकालीनं वेदाध्ययनं पूर्ववेदाध्ययनानुस्मृतिनिबन्धनम्, वेदाध्ययनत्वात् , इदानींतनवेदाध्ययनवत् , इत्यनादित्वसिद्धेः। न चैवं सर्वेष्वपि ग्रन्थेषु इदमनादित्वं सुसाधमिति वाच्यम् ; तैस्तैरेव ग्रन्थैस्तत्कर्तृणां[5] प्रतिपादनात् , तदागमविरोधात् । इहापि श्रुत्यैव वेदस्य र्ता तिपाद्यते; इति चेत् , किं हिरण्यगर्भविषयया 'इदं सर्वमसृजत ऋचो यजूंषि'[6] इत्यादिश्रुत्या, किं वा ईश्वरविषयया 'अस्य महतो भूतस्य निःश्वसितम्'[7] इत्यादिश्रुत्य ? नाद्यः, 'यो ब्रह्माणं विदधाति'[8] इत्यादिश्रुतौ हिर यगर्भोत्पत्तेः गेव वेदसद्भावावगमात् । सतामेव [9]वेदानां हिरण्यगर्भबुद्धौ प्राथमिकमाविर्भावमभिप्रेत्य 'असृजत' इति श्रुतिरप्युपपन्ना । न द्वितीयः; उपादान करणपठिता सा श्रुतिः ईश्वरस्य वेदोपादानत्वमेव ते, न तु वेदकर्तृत्वमपि[10]। ईश्वरोपादानत्वमपौरुषेयत्वं च विरुद्धमिति चेत्, न; एतादृशपौरुषेयत्वस्याङ्गीकृतत्वात् ।

---

१. Ś omits
२. Ś : असर्वज्ञमिति
३. T omits किं
४. Ś alone inserts ब्द
५. Ś omits तत्
६. Bṛh., I-ii-5
७. Bṛh., II-iv-10
८. Śvet., VI-18
९. Ś inserts हि
१०. C omits अपि

भ रतादीनां व्यासादिभिः म नान्तरेणार्थं बुद्ध्वा रचितत्वं पौरुषेयत्वम् ततो मूलप्रमाणापेक्षं तत्प्रामाण्यम् । वेदो नार्थं बुध्वा रचितः, असर्व वचनत्वाभावे सति धर्माधर्मब्र प्रमा त्वात्, परपरिकल्पितेश्वरबुद्धिवत् तथा च ब्रह्म ार्यस्यापि वेदस्य स्वतः सिद्धे प्रामाण्ये न ाचिद्धानिः ननु प्रमाणद वादी ह्याप्तः; [1]भ्रान्तिदृष्टस्योत्प्रेक्षितस्य च[2] वक्ता नाप्तः तथा च वेदो न माणम्, आ ाप्रणी वाक्यत्वात्, [3]उन्मत्तवाक्यवत् इति चेत्, मैवम्; वेदः प्रमाणम्, अना प्रणीतव क्यत्वात्, मन्वादि वाक्यवत् त्यपि प्रयोग त् ।

VII. कथं तर्हि निर्णय इति? उच्यते । प्र मा यं स्वत सिद्धम्, अप्रामाण्यं तु कारणदोषात् इति ह्यस्मत्सिद्धान्तः । [4]अत्रोन्मत्त वाक्यस्य भ्रान्त्या उत्प्रेक्षया वा दु ज्ञानं मूलमित्य ाम य चितम् मन्वादिवाक्यस्य स्वत एव प्रा ाण्ये सति आ प्रणीतत्वाख्यो गुणोऽपि तिबन्ध ारणदोषनिवारकतया उपयुज्यते । वेदस्य तु प्रतिबन्धा संभवात् अन्तरेणैव गुणं स्वतः ामाण्यं सिध्यति । नन्व योग नपेक्षत्वे स्मर्य ाणेनापि घटशब्देन घटः प्रमीयेत । प्रमीयतां नाम यत्र कुत्र चित्, पुरोवर्तिनि तु घटरहिते स्थले प्रमाण न्तर विरोधात् न मास्यते ।

VIII. अथ मतम् कस्यचित् कदाचित् असति प्रमाणान्त रोदये तस्मिन्नपि स्थले घटः स्मर्यमाणशब्दात् प्रमीयते । तर्हि प्रयोग एव प्राम ण्ये हेतुरस्तु । स च प्रयोगो द्वेधा निष्पद्यते । [5]मन्वादिवा क्य नि मानान्तरेणार्थमुपलभ्य युक्तानि; वेदवाक्यानि पूर्वपूर्वप्रयोगान् अनुस्मृत्य युक्तानि । उन्मत्तवा यानि पुनस्तदुभयाभावाद म णमेव

IX. नन्वेवं वेदे[6] ामाण्यमन्धपर पराग्रस्तं भवेत् इति

---

१. All except Ś read दृ - स्योत् क्षितस्य
२. C : ा
३. P : त्त ाक्य
४. P, C : त्र
५. P omits न्वादि ा ानि
६. Ś : वेद ामाण्यं

चेत्, तर्ह्येवं व्यवस्था अस्तु; स्मर्यमाणशब्देभ्यः तात्पर्याभावात् नार्थ-
मितिः; वेदे पुनरध्ययनविधितात्पर्यात् आप्त योगाभावेऽपि प्रमिति-
रुत्पत्स्यते इति। न चाध्ययनविधिवाक्यस्य तात्पर्याभावाद् ामाण्यं
शङ्कनीयम्, स्वेनैव तात्पर्यसिद्धेः। न चैवमात्माश्रयो[1] दोषः; शब्द-
शब्दवत्स्वपरनिर्वाहकेष्वविरोधात्। अतो वद्वेदस्य पि पर्यालोचनायां
अनादित्वं पर्यवस्यति, न तु कालिदासादि न्थवत् पौरुषेयत्वम्। न
च नादित्वेऽपि पुराणवाक्यवत् अन्यथा[2]संनिवेशप्रणयनं शङ्कनीयम्;
नियतक्रमविशिष्टानामेव वर्णपदवाक्यप्रकरण ण्डादीनां वेदशब्दवाच्यानां
कल्पादिप्रलययोरपि आविर्भावतिरोभावमात्रभाजां कूटस्थनित्यत्वाङ्गी-
कारात्।

X. तर्हि वेदो न ब्रह्मोपादानः, अनादित्वात्, कूटस्थनित्य-
त्वाच्च, ब्रह्मवत्। इति चेत्, न[3], स्वतन्त्रोपाधिहतत्वात्[4]। वेदस्[5] -
परतन्त्रः, ब्रह्मण्यारोपितत्वात्, यथा रज्ज्वा रोपितो रज्जु-
तन्त्रो सर्पः।

XI. ननु रज्जुसर्पवत् वेदस्य थं मिथ्यात्वमुच्यते?[6]
निर्वक्तुमशक्यत्वात् इति ब्रूमः। तथा हि। किं वर्णमात्रं वेदः? किं
वा क्रमसहिता वर्णाः? नाद्यः, अक्रमव्युत्क्रमोच्चारितेषु वर्णेषु वेदबुद्ध्य-
भावात्। द्वितीयेऽपि[7] स क्रमः किं वर्णनि ः, उच्चारणनिष्ठो वा, उपल-
ब्धिनिष्ठो वा? वर्णनिष्ठत्वेऽपि तावत् क्रमो न देशकृतः संभवति, वर्णानां
सर्वगतत्वात्। नापि ालकृतः, नित्यत्वात्। नापि वस्तुकृतः, विरो-
धात्; न हि ए दैव 'राजा जारा' इति जकारस्य पूर्वापरभावो[8] युक्तः।
नाप्युच्चारणनिष्ठः क्रमो वर्णेषु उपरज्यते, उ ारणतत मयोः श्रोत्राविषय-
त्वात्; वेदस्तु वर्णात्मा श्रोत्र ाह्यः। उपलब्धिनिष्ठोऽपि किं वर्णानां

---

१. Ś : आत्मा यदोषः
२. P, Ś repeat अन्यथा
३. न is found only in C, P and Ś
४. P : स्वतन्त्रोपाधिरहि ात्
५. P omits
६. P, Ś : वेदस्यापि मिथ्यात्वं थं निर्दिश ते?
७. P : तु
८. Ś : पूर्वापरीभाव

धर्मः? उत वर्णेष्वारोप्यते ? किं वा वर्णानामुपलक्षणम् ? नाद्यः, अन्यनिष्ठस्य न्यधर्मत्वानुपपत्तेः । द्वितीयेऽपि अख्यातिवादिनः क्रममात्रस्य [1] वर्णमात्रस्य वा वेदशब्दानर्हत्वात् विशिष्टप्रत्ययस्य अनङ्गीक रात् अविवेकमात्रमेव वेद इति अर्थावबोधो न स्यात् । अन्यथाख्यातौ पुनः [2]विशिष्टप्रत्ययम त्रत्व त् विशिष्ट र्थस्याभावात् [3]ज्ञाना तिरिक्तो वेदो न स्यात् । न तृतीयः, क्रमविशिष्टवर्णप्रत्ययस्य प्रत्यक्षत्वात् । अतोऽनिर्वचनीयो वेदः । अनिर्वचनीयस्यापि तुच्छव्या त्तत्वात् देहात्मवत् अर्थक्रियासामर्थ्यमविरुद्धम् । तदेवं ब्रह्मविवर्ततया कार्यस्यापि वेदस्य अनादित्वकूटस्थ नित्यत्वाभ्यां मानान्तरादर्थोपल ब्धिपूर्वकपुरुषेच्छाधीननिष्प - द्यत्वाभावात् न पौरुषेयत्वदोषः । सर्वार्थ काशकवेदोपादानस्य ब्र णः उपाध्यायवैलक्षण्यात् असर्वज्ञत्वदोषोऽपि न[4] । न च ब्रह्मणः स्वयंप्रकाशस्य सर्वसंसर्गित्वादेव सर्वज्ञतासिद्धौ वेदोपादानत्वेन तत्साधनं व्यर्थम् इति वाच्यम् ; वाय्वाकाशरसगन्धादिसंसर्गिणः सवितृकिरणस्य तत्प्रका- त्वादर्शन त् । तस्मात् सर्वार्थ काशनसमर्थसर्ववेदोपादानतयैव सर्वज्ञत्वं साधनीयम्, इति सूत्र र भिप्रायः ।

इति षष्ठवर्णकम्

१. P, Ś insert च
२. P, Ś read the text as construed above; others read : विशि त्ययस्यानङ्गी रात् विवेकमात्र त् विशि र्थस्य चाभा- त् । The reading of P and Ś has the support of Vivaraṇa Cf. p. 230: अन्यथाख्या ौ पुनः विशि प्रत्यय- ा त्वात् विशि र्थाभा त् विज्ञा- ातिरिक्तो वेदो न स्यात् । C agrees with T and V but reads अविवे त्रमे वे ा- म ? त्
३. Ś : वि ्ान
४. P, Ś : अ वे ् दो ोऽपि

## सप्तमवर्णकम्

I. अथ वा द्वितीयसूत्रे लक्षणमभिधाय अनेन माणं ति-ज्ञायते 'श स्त्रयोनित्व त्' इति ; वेदप्रमाणकत्वात् इत्यर्थः । अने र्थ-सूचकत्वं [1]सूत्रस्यालङ्कारो न वाक्यभेद[2]दोषमावहति, विश्वतो खमिति सूत्रलक्षणे[3] दर्शनात् । ब्र प्रमापकं च वेदवाक्यम्, 'यतो वा इमानि'[4] इत्यादि । यद्यप्येतत् पूर्वसूत्र एवोदाहृतम्, तथाप्येतत्सूत्रवैयर्थ्यं नास्ति ; एतत्सूत्रप्रतिपाद्यं श स्त्रैकवेद्यत्वं ब्र णोऽभिलक्ष्य पूर्वसू स्यागम थने तात्पर्याभिधानात् । अन्यथा पूर्वसूत्रस्य युक्त्युपन्यासमात्रे तात्पर्यं को निवारयेत् ? युक्त्युपन्यासमात्रत्वे च प्रतिकार्यं पृथक्कारणजन्यताया अपि संभवात् सर्वज्ञं सर्वशक्ति ब्रह्म जगत्कारणं इत्ययमर्थो न सिद्ध्येत् । न च बृहतेर्धातोः अर्थानुगमात् तत्सिद्धिः; बृहत्यर्थवाचिनो शब्द-स्यापि वेद एव प्रयोगात् । न हि लोके जगत्कारणे शब्दः प्रयुज्यते । अतो जन्माद्यस्य यतः शास्त्रैकप्रमाणं तद् इत्येतावदिद-मेकं सूत्रम्, तावता युक्तिमात्रशङ्का निवृत्तेः । पृथक्करणं तु शास्त्रोपादा-नत्वेन सर्वज्ञत्वं सुसंपादमिति व्याख्यानान्तरेण थयितुम् । तस्मात् जगज्जन्मादिनिमि[5]त्तोपादानकारणं सर्वज्ञं ब्रह्म शास्त्रैकग यं इति सू -द्वयेन सिद्धम् ।

II. तत्र बिम्बस्थानीयं ब्रह्म मायाशक्तिमत्कारणम्, जीवाश्च प्रत्येकमविद्यानुबन्धाः, इति केचित् । मायाविद्याप्रतिबिम्बितं जगत्कारणम्, विशुद्धब्रह्मामृतत्वाल बनम्, जीवाश्चाविद्यानुबन्धाः; इत्यन्ये[7] । प्रथमे पक्षे मायाविद्ययोर्भेदः, ब्रह्मणश्च न प्रतिबिम्बता; द्वितीये तु तद्वैपरीत्य-मिति विशेषः । ब्रह्मसिद्धिकारास्त्वेवमाहुः । जीवा एव स्वा विद्यय

---

१. C inserts च
२. भेद is found only in Ś
३. C : लक्षणदर्श ात्
४. Taitt., III-i.
५. P : शा ाण
६. C inserts स्थिति
७. C : इति केचित्

त्ये प । रेण ब्र णि विश्रा यन्ति ; ब्र तु मायाविशि बि ब-
रूपं प्रतिबिम्बरूपं व न जगत्कारणम् ; 'यत् त्वया दृष्टं तन्मय दृ मू
ति संवादस्तु बहुपुरुषावगतद्वितीयचन्द्रवत् सादृश्यादुपपद्यते ; स्वरूपे-
ण धिष्ठानत मपेक्ष्य ब्र णो जगत्कारणत्वव्यपदेशः इति । इष्टसिद्धिक रा
कारान्तरेण वर्णयन्ति, ब्रह्मैकमेव स्वाविद्यया जगदाकारेण विवर्तते
स्वप्न दिवत् ति । सर्वेऽप्येते सिद्धान्ताः, प्रक्रियाणां तत्त्वावबोधार्थ[2]
ल्पितत्वात् ; इति सर्वं[1] निर्मलम्[3] ।

इति त र्णकम्

तृती सूत्रं ाप्तम्।

---

१. Ś, C :
२. P : र । बोधार्थं
३. P : मङ्गलम्

## अष्टमवर्णकम्

I. तृतीयसूत्रे ब्रह्मणि वेदान्ताः प्रमाणमिति प्रतिज्ञातम् । चतुर्थसूत्रे तत्प्रामाण्यमुपपाद्यते ।

II. ननु सूत्रकारवचनविरोधात्, भूतवस्तुप्रतिपादनायोगात्, प्रयोजनशून्यत्वात्, अनधिगतार्थत्वाभावाच्च न ब्रह्मणि वेदान्त[1]प्रामाण्यं संभवति । सूत्रकारो हि जैमिनिः ‘आम्नायस्य क्रियार्थत्वात्’ इति सूत्रेण अक्रियार्थानां वेदान्तानामानर्थक्यमेवाह । यद्यप्यादिमध्या सानेषु वेदान्तानां ब्रह्मैक्यतात्पर्यदर्शनात् न आनर्थक्यसंभवः, तथापि न प्रामाण्यं घटते । ब्रह्मबोधका वेदान्ता न प्रमाणम्; मानान्तरयोग्यत्वे सति मानान्तरानुपलभ्यस्य ब्रह्मणो बोधकत्वात्; यथा स्पर्शयोग्यस्य स्पर्शानुपलभ्यस्य चित्रगतनिम्नोन्नतभावस्य बोधकं चाक्षुषज्ञानम् । न च विशेषणासिद्धिः; ब्रह्म मानान्तरयोग्यं, परिनिष्ठितवस्तुत्वात्, घटादिवत् । न च ब्रह्म एकप्रमाणवेद्यम्, परिनिष्ठितत्वात्, गन्धादिवत्, इति वाच्यम्; चक्षुःस्पर्शनग्राह्येषु घटादिद्रव्येष्वनैकान्त्यात् । तथापि प्राभाकराभिमतं कार्यं प्रमाणान्तरयोग्यम्, तुच्छव्यावृत्तत्वात्, घटवत् इत्याभाससमानत्वम्; इति चेत्, न; परिनिष्ठितत्वस्य उपाधित्वात् । अनु[2]मेयभविष्यद्वृष्ट्यादौ परिनिष्ठितत्वाभावात् न साध्यव्याप्तिः; इति चेत्, एवमपि प्रमाणान्तरयोग्यत्वं प्रति प्रतियोग्यपेक्षस्य तुच्छव्यावृत्तत्वस्य प्रयोजकत्वे गौरवम्, तन्निरपेक्षस्य परिनिष्ठितत्वस्य प्रयोजकत्वे लाघवम्, इति नास्त्येव साम्यम् । ब्रह्म शब्दैकगम्यम्, रूपादिभिः व्याप्तिग्रहादिभिश्च हीनत्वात्, परकीयकार्यवत्; इति चेत्, न, अनुभवगम्यताया अपि भवद्भिरङ्गीकारात् । एवं च सति प्रथमानुमाने हेतुगतं ‘मानान्तरानुपलभ्यस्य’ इति विशेषणमसिद्धम्; इति चेत्, न; अनु[3]मातॄणां ब्रह्मानुभवासिद्धौ[4] विशेषणसिद्धेः । अतः प्रथमानुमानेन संवादकमूलप्रमाणरहितानां

१. P : वेदान्तानां प्रामाण्यं
२. C : आनुमानिक etc.
३. P : अनुभवादिसिद्धौ विशे सिद्धेः
४. Ś : सिद्ध्यै

वेदान्तानामप्रामाण्यं सिध्यति । अपौरुषेयवचसां न मूलप्रमाणापेक्षा ; इति चेत् , सत्यम् । तथापि 'अहं मनुष्यः' इति त्यक्षेण बाधितत्वात् 'आदित्यो यूपः' इतिवदप्रामाण्यमेव । उक्तप्रत्यक्षस्य दोषजन्यत्वेन श्रुत्यबाधकत्वेऽपि सिद्धे ब्रह्मणि प्रवृत्तिनिवृत्तिसाध्ये प्राप्त्यनिष्टपरिहार-रूपप्रयोजनासंभवात् तात्पर्यरहिता वेदान्ता नैव प्रामाण्यं लभन्ते । अथोच्येत 'न योजनं तात्पर्यं वा प्रामाण्यप्रयोजकम्, किं तु अनवगत र्थ-बोधकत्वम्' इति, एवमपि मानान्तरायोग्यं कार्यमेव वेदः प्रमापयतु, न तु तद्योग्यं सिद्धं ब्रह्म । तस्मादनर्थक वेदान्ताः ।

III. अध्ययनविधिपरिगृहीतानामप्रामाण्यमयुक्तमिति चेत् , तर्हि कर्तृरूपस्य जीवस्य देवतारूपस्य ब्रह्मणश्च प्रकाशकत्वेन क्रियाविधि-शेषत्वमस्तु ; तथा च मन्त्रार्थवादादिवत् प्रामाण्यं सेत्स्यति इति । ब्र -विधायकत्वेनैव प्रामाण्यमस्त्विति चेत् , न ; क्रियाविषयस्य विधेः परि-निष्ठितवस्तुन्यसंभवात् ।

IV. ननु न तावद्वेदान्ता एकस्य विधेः शेषभूताः, 'सोऽरोदीत्' इत्यादिवत् प्रकरणपाठाभावात् ; नापि सर्वविधिसमूहस्य, भिन्न-वस्तुप्रतिपादकानां सर्वविधीनां एकवाक्यत्वाभावात् । न च धर्मसाम-न्यमेकमेव सर्वविधिभिः प्रतिपाद्यमिति वाच्यम् , सामान्यस्यानुष्ठानानर्ह-त्वात् । अथोच्येत यथा सर्वक्रतुस बन्धिन्या जुह्वाः प्रकृतिद्रव्यं समर्प-यत् पर्णमयीवाक्यमनारभ्याधीतमपि सर्वक्रतुवाक्यानां प्रत्येकं शेषभावं भजते, तथा कर्तुः समर्पका वेदान्ता अपि इति । नैतत्सारम् , निर्वि-शेषप्रधानैः वेदान्तैः आत्मनि स्तूयमाने प्रतिपाद्यमाने वा कर्मप्र तावनु-

१. C omits निवृत्ति
२. P omits एव
३. Ś : उच्यते
४. P : वेदान्ताः प्रमापयन्तु
५. C : र्यमे वा सिद्धं ब्रह्म
६. Ś omits इति
७. Ś : विशेषस्य
८. TS, I-v-1.
९. C omits from द्रव्यं up t अपि इति
१०. Ś : कर्तु मर्पकाः
११. C : निर्दोषप्रमाणैः

ग्योगात् । न चोपयोगः कल्पयितुं शक्यः, कर्तृत्वादिसर्वविशेषनिराकरणस्य प्रवृत्तिविरोधित्वात् । तस्मान्न क्रियाविधिशेषा वेदान्ताः[1] ।

V. एवं तर्हि सगुणोपासनविधिशेषा[2] भवन्तु । न चैवं मन्तव्यम्· उपासनाविधिशेषैरपि वेदान्तैः सर्वज्ञत्वादिगुणविशिष्टं जगत्कारणं परिनिष्ठितं ब्रह्मस्वरूपं न सिध्यति, संवादकमूलप्रमाणाभावात् ; अत उपास्यासिद्धौ[3] थ पासनाविधिः? दूरे तच्छेषत्वं वेदान्तानाम्· इति । अनुमानादनिर्दिष्टविशेषे जगत्कारणेऽवगते तस्योपासनाविधौ नित्यशुद्धबुद्धसत्यज्ञानानन्तत्वा॒पास्यगुणारोपेण वेदान्तानामन्वयात् । ननु वेदान्तानामुपासनाविधिपरत्वेन देवताकाण्डेऽन्वयः तावन्नास्ति, प्रकरणभेदात् ; स्वकाण्डे तु वस्तुमात्रपर्यवसायिनि न कोऽपि विधिः श्रूयते, न च ल्पयितुं शक्यते, 'पूषा प्रपिष्टभागः'[4] इत्यादौ द्रव्यदेवतास बन्धवत् अत्र विधिकल्पकस्याश्रुतत्वात् । इति चेत्, मैवम् ; अध्ययनविधिपरिग्रहेण प्रामा यं परिकल्प्य[5] तत्प्रामाण्यान्यथानुपपत्त्योपासनाविधेः ल्पयितुं शक्यत्वात् । फलं च 'एतावदरे खल्वमृतत्वम्'[6] इत्याद्यर्थवादगतं मोक्षरूपमवगन्तव्यम् । तस्मान्न ब्रह्मणि वेदान्ताः प्रमाणम्, किं तु उपासनायाम् ।

VI (a). इत्येवं पूर्वपक्षे प्ते सूत्रकार आह तत्तु समन्वयात्· इति[7] । तु-शब्देन पूर्वपक्षो निषिध्यते । तत्-इति स्वपक्षे तिज्ञा[8] । ब्रह्म वेदान्तैः प्रमीयते[9] इत्यर्थः । कुतः? वेदान्तानां ब्र णि तात्पर्येण स यगन्वितत्वात् ।

VI (b). [10]ननु तात्पर्यं नाम पुरुषधर्मः ; स च[11] कथं वेदा-

१. Ś, C insert इति
२. Ś : विधि रा:
३. C omits उपास्यासिद्धौ थमुपासनाविधिः?
४. TS, II-vi-8
५. P : माण्यपरि ल्पनं
 Ś : माणं ता त्परिकल्प्य
६. Bṛh., IV-v-15.
७. C omits इति
८. C : स्वपक्षप्रतिज्ञा
९. C : तं वेदान्त प्र । प्रमीयते
१०. C omits ननु
११. C omits च

न्तानां स्यात्? इति चेत्, मैवम्। न हि विवक्षैव तात्पर्यम्, सत्यामपि विवक्षायां अप्रयुक्ते शब्दे तात्पर्यव्यवहाराभावात्। नापि पुरुषप्रयोगमात्रम्, उन्मत्तादिप्रयोगे तदभावात्। अतः तदर्थप्रमितिशेषत्वं[1] तात्पर्यम्; तच्च शब्दधर्म एव। न च तस्मिन्नपि विवक्षैव तत्प्रयोजिका इति वाच्यम्; केवलव्यतिरेकाभावात्, सत्यपि तादर्थ्ये विवक्षाभावापराधेन तात्पर्याभावादर्शनात्। न च विवक्षाव्यतिरेकेण[2] तात्पर्यगमकाभावः; उपक्रमादीनां[3] भावात्।

VI (c). न च प्रमेयस्य कार्यत्वमेव तात्पर्यगमकम्; 'पुत्रस्ते जातः' इत्यादिष्वसत्यपि कार्यत्वे तात्पर्यदर्शनात्। तत्रापि तात्पर्यादेव मेयस्य कार्यपर्यवसानमनुमीयताम्; इति चेत्, न, [4]कार्यत्वप्रमितितात्पर्ययोः अन्योन्याश्रयप्रसङ्गात्, कार्यविषयप्रमितौ सत्यां तत्प्रमितिजननसामर्थ्यलक्षणं तात्पर्यं[5] सिध्यति सिद्धे च[6] तस्मिन् तत्प्रमितिसिद्धिः इति। ननु तात्पर्याभावः प्रमिति- तिबन्धकः, 'विषं भुङ्क्ष्व' इत्यादौ वाक्यादेव प्राप्ताया विषभोजनप्रमितेः तात्पर्याभ वेन प्रतिबध्यम नत्वात्; तत्प्रतिबन्धनिवारकं च तात्पर्यम्; तथा चँ[7] प्रथमतो वाक्यादेव कार्यप्रमितौ सत्यां पश्चात्तथैव कार्यप्रमित्या प्रतिबन्धनिरासि तात्पर्यमप्यस्तीत्यवग यते[8]; न पुनस्तात्पर्येण कार्यप्रमितिर्भाव्यते[9]; ततो नान्योन्याश्रयः। इति चेत्, सत्यम्; तथापि कार्यत्वं न तात्पर्यलिङ्गम्; 'जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा' [10]इत्यादिषु सत्यपि कार्ये तात्पर्याभावात्; 'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' इत्युत्तरवाक्येन अर यतिल नां गवीधुकानां च निराकरणात्।

VI (d). तस्मादुपक्रमादीन्येव त त्पर्यलिङ्गानि।

---

१. C : ि पत्तिशे त्वं
२. Ś : विवक्षातिरेके
३. C : ा॒ र्यग्राहकोपक्रमादीनां
४. Ś : र्यप्रमि ति
५. Ś : नन
६. P, C : सति
७. P omits था
८. C : अस्तीति गम्यते
९. P, C : ायते; Ś : ज्ञायते
१०. T S, V-iv-3 (2)

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिश्चये[१] ॥

इत्युक्तत्वात् । प्रसिद्धानि हि सर्वेष्वपि वेदान्तेषु ब्र णः उपक्रमादीनि । ततस्तात्पर्येण वेदान्ता ब्रह्मणि समन्विताः ।

VII. अन्वयस्य सम्यक्त्वं नाम इतरवैलक्षण्येन अर्थ ति- पादनम् । इतरत्र हि 'गामानय' इत्यादिशब्दाः ि याकारकसंसर्गं प्रति- पादयन्ति । 'उद्भिदा यजेत' इत्यत्र उद्भिद्यागशब्दयोरेकार्थत्वेऽपि नियोगाकाङ्क्षा विद्यते । 'नीलमुत्पलम्' इत्यत्र गुणगुणिनोः भेदा- भेदौ प्रतिपाद्यौ । एकार्थप्रतिपादकेष्वप्यन्येषु[२] शब्देषु लिङ्गसंख्ये अवर्ज- नीये । वेदान्तास्तु न तथा संसर्गं वा साकाङ्क्षार्थं वा भेदाभेदौ वा लिङ्गसंख्याविशिष्टं वा प्रतिपादयन्ति; किं तु अभिधावृत्त्या लक्षणया उपाधिद्वारा वा[३] अखण्डैकरसमेव जगत्कारणसामान्यानुवादेन ति- पादयन्ति ।

VIII. तत्र ज्ञानशब्दोऽनेकविकारयुक्तान्तःकरणवृत्तिप्र तिबिम्बि- तचैतन्ये व्युत्पन्नः । आनन्दशब्दश्च शुद्धसात्त्विकान्तः रणवृत्त्य- भिव्यक्तार्यां[४] अत्यनुकूलतया स्फुरन्त्यां कस्यांचिद्व्यक्तौ लोके प्रसिद्धः । तावेतौ ज्ञानानन्दशब्दौ वाक्यान्तरेण नित्यत्वप्रतिपादकेन विरोधात् वृत्त्यंशं परित्यज्य अनुकूलतया स्फुरन्तीं व्यक्तिं तिपादयतः । तथा च वृत्तित्यागांशे[५] लक्षणा; इतरांशे तु ख्यवृत्तिः । एकसत्यानन्त- शब्दाः स्वगतभेदाभावमिथ्यात्वाभावसजातीयविजातीयद्वितीयाभावाभि- धानद्वारेण तत्र लक्षणया वर्तन्ते । 'सर्वज्ञः' 'सर्वशक्तिः' इत्यादिशब्दाश्च अनिर्वचनीयप्रपञ्चोपाधितया तत्र[६] वर्तन्ते । 'अयमात्मा ब्र '[७] 'तत्व- मसि'[८] इत्यादिशब्दाश्च भागत्यागलक्षणया ब्र ण्येव वर्तन्ते । तदेवं सर्वे वेदान्ता अखण्डैकरसब्रह्मप्रतिपादकाः ।

१. C : निर्णये
२. C omits अपि
३. Ś : च
४. C : अभिन्नार्यां
५. C : त्रिभागांशे
६. P omits त
७. Bṛh., II-v-19
८. Chānd., VI-viii-7

IX. ननु सत्यज्ञानादिशब्दानां भिन्न र्थत्वे थमख ण्डैकरसे त्तिः? ए र्थत्वे पुनरुक्तिप्रसङ्गः । नैष दोषः; तात्पर्येण तिपाद्यस्यै-कत्वेऽपि व्यावर्त्यानां असत्यजडादीनां अनिर्वचनीयार्थानामनेकत्वात् । न चानिर्वचनीयपदार्थेन तदभावेन वा परमार्थभावरूपाद्वैतस्य ाचित् क्षतिरस्ति । तस्मात् 'तत्त्वमसि'-आदिमह वा यानि 'सोऽयं देवदत्तः' इत्य दिवाक्यवदखण्डैकरसं तिपादयन्ति । तथा हि । एकं देवदत्तं एकस्मिन् देशे ाले च द्वौ पुरुषौ द वन्तौ । पुनर्देशकालान्तरे तमेव तावेव ददृशतुः । तयोर्मध्ये 'सोऽयं देवदत्तः' इति प्रत्यभिजानात्येकः । अपरस्तु पूर्वद ात् देवदत्ताद्भिन्नं पश्चाद्द[१] मन्यते । तं प्रत्यभिज्ञाहीन-ितरो बोधयति 'ोऽयं देवदत्तः' इ ति । तत्र बोध यित स्प भेदेन प्रतीयमानयोः तत्तद्देशक लयोः तद्विशि योर्वा देवदत्तयोरैक्यं न प्रत्य-भिजानाति, विरोधात् । ि तु विशि द्वयोपलक्षित ए ो देवदत्तः प्रत्य-भिज्ञागोचरः । तं[२] प्रत्य भिज्ञातं देवदत्तस्वरूपं यं विशि भिधायि-भ्यां 'सोऽयम्' इति पदाभ्यां स्वार्थैकदेशपरित्यागेन एकदेशलक्षणया परस्मै प्रतिपादयति ।

X. ननु 'सोऽयम्' इति पद र्थयोः यद्देवदत्तैक्यं तदेव वाक्येनापि प्रतिपाद्यते ? उत न्यत् ? आद्येऽनुवादप्रसङ्गः;[३] न द्वितीयः, ऐक्यान्तरस्य भ वात् । इति चेत्, न[४]; प्रत्यभिज्ञाया अप्यनेनं न्यायेन अ ण्यप्रसङ्गात्, अभिज्ञागतस्यैवैक्यस्य बोधने अनुवादकत्वं ऐक्य -न्तरं तु नास्तीत्यत्रापि सुवचत्वात् । एकस्य ालद्वयसम न्धः प्रत्यभि-ज्ञाप्रमेयम्; इति चेत्, न; स्य प्यभिज्ञाद्वयेनैव सिद्धत्वात् । अथ प्रत्यभिज्ञानस्य अनधिगतार्थगन्तृत्वाभावेऽपि भेदभ्रमव्युदासित्वात् अभि-ज्ञाभ्यां भेदभ्रमाव्युद सिनीभ्यां फलतो विशेषसद्भावात् [६]ामाण्यम्, तर्हि

१. Ś i sert देद
२. P, T : प्रत्यभि ानम्
३. C : ऽ दत्व :
४. C :
५. P, S : नेनै ;
Ś omits पि
६. C : ा ाण म्

'सोऽयम्' इति वाक्यस्याप्येवमेव पदाभ्यां विशेषसद्भावात् ामाण्यमस्तु। एवं च तत्त्वमसिवाक्यमपि त्वंपदार्थे कर्तृत्वाद्यंशं विरोधिनं परित्यज्य साक्षिमात्रमुपादाय तत्पदार्थे परोक्षाद्यंशपरित्यागेन अवशि न चिन्मात्रेणैक्यं पदार्थप्रतीतिसमये प्रतिपन्नमपि भेदभ्रमव्युदासाय प्रतिपादयति। तदयं प्रयोगः—तत्त्वमस्यादिवाक्यं अखण्डार्थनिष्ठम्, यकारणव्यतिरिक्तद्रव्यनिष्ठत्वे सति समानाधिकरणत्वात्, 'सोऽयं देवदत्तः' इति वाक्यवत् इति।

XI. ननु 'मृत् घटः', 'नीलमुत्पलम्' इत्यादौ पदार्थयोः प्रत्येकमसाधारणमैक्यमेकैकपदप्रमेयम्, पदार्थयोः इतरेतरैक्यं तु वा यप्रमेयम्, इत्यनधिगतार्थगन्तृत्वादेव यथा वाक्यप्रामाण्यं तथा अत्र -ण्यमस्तु; तथा च 'भेदभ्रमव्युदासमात्रविशेषात् प्र माण्यम्' इत्येष - कल्पना न भविष्यति। इति चेत्, न; वैष यात्। तत्र हि ायकारणयोः द्रव्यगुणयोश्च भिन्नयोरैक्यं प्रतिपाद्यते, 'व्यवहारे [भाट्टनयः' इति न्यायेन भेदाभेदा]भ्युपगमात्। अत्र तु अखण्डैकरसं प्रतिपाद्यत इ अस्ति महद्वैषम्यम्।

XII. अत्र केचिदाहुः 'य आत्मनि तिष्ठन्,' 'एष त आत्मा सर्वान्तरः' इत्यादिशास्त्रात् जीवब्रह्मणोरपि भेदाभेदावभ्युपेयौ; अन्यथा पदार्थवाक्यार्थयोः साङ्कर्यात् इति। ते व्याः 'तत्र भेदो ज्ञानेन निवर्त्यते न वा?' इति। न चेत्, मोक्षो न स्यात्। निवर्त्यते चेत्, तदापि भेदाभेदविषयमेव ज्ञानं तन्निवर्तकम्, उताभेद त्रविषयं ज्ञानान्तरम्? नाद्यः, ज्ञानस्य स्वविषयनिरासित्वायोगात्। न द्वितीयः, अभेदज्ञानजनकप्रमाणाभावात्; त्वन्मते शास्त्रस्य भेदाभेदविषयत्वात् शास्त्रजन्यभेदाभेदज्ञानाभ्यासादभेदज्ञानं जायत इति चेत्, एवमपि

१. All except Ś and P read रण
२. C omits च
३. C omits the words within bracket
४. P inserts इति
५. Bṛh., III-iv-1
६. C omits वाक्यार्थ
७. Ś : ापि
८. C : १ वि १ निर्वासित्वायो

ज्ञान निवर्त्यत्वे भेदस्य मिथ्यात्वं स्यात् । ज्ञानेनाज्ञानं निवर्त्यते, भेदस् मभिर्विनश्यति ; इति चेत्, न; 'ब्रह्म वेद ब्रह्मैव भवति '[१] इत्येव-ाराभिधेयभेदनिरासस्य ज्ञानप्रयुक्तत्वावगमात् । अथ ज्ञान ागभाववत् भेदस्य ज्ञाननिवर्त्यत्वेऽपि न मिथ्यात्वम्, तथापि किं येनैवा ारेण जीवस्य ब्र णो भेदः तेनैवाभेदोऽपि, उत अन्याकारेण[२] ? आद्ये भेदे[३]-नि त्तावभेदोऽपि निवर्तेत, तत्[४]प्रयोजकाकारस्यैक्यात् । द्वितीये[५] निरव-यवब्र भूतस्य[६] जीवस्य धर्मभूतो भेदो न तावत् कर्मणा निवर्तयितुं शक्यते । ज्ञानेन तन्निवृत्तावपि यदि तेन भेदेनोपलक्षितो जीवः तदा ब्र व जीवः स्यात् । अथ भेद विशिष्टः, तर्हि भेदनाशे जीवोऽपि नश्येत् । अथ विशिष्टाकारनाशेऽपि विशेष्यांशो जीवो ब्रह्मैक्यरूपं मोक्षमनुभवेत्, तर्हि संसारदशायामपि ब्रह्मतादात यापन्नः स एव विशेष्यांशो जीव इत्य-भ्युपेयम् ; संसारमोक्षयोः वैयधिकरण्यायोगात् । एतेनैतदप्यपास्तं यत् अमृतानन्देनोच्यते 'न युगपत् जीवब्रह्मणोर्भेदाभेदौ, विरोधात्, किं तु पदार्थत्वदश यामतिरेको वाक्यार्थत्वदशायां चाखण्डत्वम्' इति । 'एक-धैवानुद्र व्यम्'[७], 'नेह नानास्ति किंचन'[८] इत्यादिश्रुतिविरोधश्च । न च 'य अ त्मनि तिष्ठन्' इत्यादिश्रुतिः भेदाभेदौ प्रतिपादयति ; किं तु भ्रान्ति सिद्धं भेदमनूद्य अभेदमेव बोधयति । कथं तर्हि पदार्थवा या-र्थयोः साङ्कर्यपरिहारः? इति चेत्, उच्यते । तत्र न तावत् पदवाच्यस्य वाक्यार्थेन साङ्कर्यप्रसङ्गोऽस्ति, वाच्यस्याविद्याकल्पितोपा धिवि शि त्वात् । पदलक्ष्यस्य तु वाक्यार्थत्वमिष्टमेव । तस्मात् महावाक्यस्याखण्ड र्थतायां न कदाचिद[९]नुपपत्तिः ।

XIII. तथा 'सत्यं ज्ञानमनन्तं ब्रह्म'[१०] इत्य द्यव न्तरवाक्य-

---

१. Mund., III-ii-9
२. C adds ा
३. T omits भेद
४. Ś, C omit तत्
५. Ś, C insert पि
६. C : निरव द्रव्यभू स्य ध - भू गे, but inserts जी स्य in the next line.
७. Bṛh., IV-iv-20
८. Bṛh., IV-iv-19
९. C : ाचित्
१०. Tait., II-i

मपि अख डार्थनिष्ठम् ; लक्षणवाक्यत्वात् , 'प्रकृष्टप्रकाशश्चन्द्रः' ति वाक्यवत् । तत्र कश्चित् चन्द्रप्रातिपदिकार्थान भिज्ञः कंचित् प च 'अस्मिन् ज्योतिर्मण्डले कश्चन्द्रो नाम ?' इति । सोऽपि चन्द्रप्रातिपदिक-मात्रार्थविवक्षया प्रयुङ्क्ते 'कृ काशश्चन्द्रः' इति । तत्र काशशब्दः प्र ाशत्वसामान्याभिधानमुखेन लक्षणया व्यक्तिविशेषे वर्तते ; कृ -शब्दश्च प्रकर्षगुणाभिधान खेन लक्षणया प्र ाशविशेषे वर्तते । तत्र गुणसाम न्ययोः चन्द्रपदानभिधेयत्वात् तदुभयं व्युदस्य तत्समवायि-प्रकाशविशेष एव चन्द्रपदाभिधेयतया समर्प्यते ; इति प्रकृष्टप्रकाशचन्द्र-शब्द नां एकार्थता सिध्यति । न चैवं पदद्वयवैयर्थ्यम् ; अ ाशमेघा-दिव्यावृत्तौ काशपदस्य अल्पप्रकाशनक्षत्रादिव्यावृत्तौ प्रकर्षपदस्य च उपयोगात् । एवं सत्यज्ञानादिवाक्येऽपि अखण्डार्थत योजनीय ।

XIV. यत्तूक्तम्[1] 'ब्रह्मणः परिनिष्ठितवस्तु[2]तया मानान्तरयोग्य-स्यापि मानान्तरेणानुपलभ्यमानत्वात् तद्बोधकानां वेदान्तानां चित्रगत-नि नोन्नतभावबोधकचक्षुर्वद्प्रामाण्यम्' इति, तत्र वक्तव्यम् 'किं मा-णान्तरयोग्यत्वे सति तदनुत्पत्तौ विषयस्याभावे निश्चिते तत्र शब्दमि-थ्यात्वमाशङ्क्यते ? किं वा प्रमाणान्तरसंभिन्नार्थविषयत्वात् पौरुषेयवचो-वत् सापेक्षं प्रामाण्यं इति[3] ? उत प्रमाणान्तरयोग्यार्थविषयतया तत्सिद्धा-र्थ[4]ानुवादाशङ्का ?' इति । नाद्यः; मानान्तरानुदयमात्रेण तथात्वे सर्वत्रा-तिप्रसङ्गात् । पौरुषेयवचसां मानान्तरसापेक्षत्वेऽपि वेदवचसः तदयो-गात् । न द्वितीयः, मानान्तरसंभिन्नार्थत्वाभावात् । विमतं वेदान्तवा यं मान न्तरसंभिन्नार्थम् , भूतार्थविषयत्वात् , नदीतीरफलसत्तावाक्यवत् ; इति चेत् , न; पौरुषेयवचनत्वस्योपाधित्वात् । अनुभूतार्थस्मृतिवदिति[5] निदर्शनेऽपि स्वार्थप्रवृत्तज्ञानान्तरजन्यत्व पाधिः । न हि वेदवा यं ानान्तरेणार्थ पलभ्य विरचितं येन साधनव्याप ता स्यात् । अथ मन्यसे वेदान्तवाक्यस्य भूत र्थविषयत्वात् मान न्तरयोग्य र्थत्वं

1. C : यदुक्तं
2. C omits वस्तु
3. C omits इति
4. P omits र्थ
5. Ś : अनुभूतार्थवि यं

धयित्वा तेन च संभिन्नार्थता साधनीया ति; तर्हि विधि-व यन पि तुच्छव्यावृत्तार्थत्वात् मानान्तरयोग्यविषयतया संभिन्नार्थ केन वार्यते ? न च विधिवाक्यत्वादेव मानान्तर-योग्य र्थत्वाभावः; लौकि विधिवाक्येषु ानान्तरयोग्य र्थत्वदर्शनात् । तत्र पि तदयोग्य र्थत्वे [1]ार्यस बन्ध हणासंभवात् वेदेऽपि तत तिपत्तिर्न स्यात् । अथ वैदिककार्यस्य ालत्रयातीतस्वभ वत्वात् मानान्तर-योग्यता, तर्हि ब्र णोऽपि रूपादिहीनस्वभ वत्वादेव मानान्तरयोग्यता न भविष्यति । अस्ति ब्र णि मान न्तरं स्वरूपचैतन्याख्यमिति चेत्, ; तस्यैव त्वात् । स्वरूपचैतन्यस्य ब्रह्मप्रमाप त्वेऽपि तत्संभिन्नार्थत्व-त्रेण न तत्सापेक्षत्वदोषः; स्वप्रकाशपुरुष न्तरसंवेदनगोचरानुमानस्य तत्सापेक्षत्वदोषादर्शनात् । नापि तृतीयः; स्पर्शज्ञानयोग्यद्रव्यविषयस्य चक्षुषोऽनुव दकत्वादर्शनात् । शब्द एवेयमनुवादकता[3] इति चेत्, तथापि विधिवाक्ये तामाशङ्कां कथं परिहरिष्यसि ? लौकिकस्य विध्यर्थस्य माना-न्तरयोग्यत्वेऽपि वैदिकस्य तदयोग्यत्वात्; इति चेत्, भूतार्थेऽपि तत्स-म नम् । न च शब्दस्यैवानुवादकत्वशङ्केति नियन्तुं शक्यम्; शब्दाव-गतेऽर्थे म नान्तरमेवानुवादकं इत्यस्य पि वचत्वात् । तस्मात् भूत र्थ-निष्ठमपि वैदिकं वचो निरपेक्षं प्रमाणम् ।

XV (a). ननु सर्वत्रोत्तम द्धो मानान्तरेण अर्थ पलभ्य त्र शब्दं युङ्क्ते; मध्यमवृद्धश्च तस्मात् शब्दात् तमर्थमवगत्य तत्र प्रवर्तते; तां च प्रवृत्तिमुपलभ्य बालो व्युत्पद्यते; यथाव्युत्पत्ति च[5] शब्दस्य बोध-कत्वम् । ततो मानान्तरसंभिन्नस्यैवार्थस्य शब्द मेयतया थं वचसो निरपेक्षं ामाण्यम् ?

XV (b). नैष दोषः । ब लो हि स्वयं ानासंभिन्नं घटादि-

१. Ś, C : ा ं न्ध
२. C : ा न्तरायो ा
३. T omits इयं
C, Ś : अनुवादकत ङ्का ति
. P omit
५. P : वेदा ं निरपे - मिति
Ś agrees with th print-ed te t, but adds इति

मेयमात्रं प्रत्यक्षादिभिरवगत्य[1] तत्र वर्तमानः स्वट न्तेन मध्यमवृद्धस्यापि मानान्तरामिश्रित[2]शुद्ध मेयज्ञानपूर्विकां प्रवृत्तिमनुमाय तस्मिन् प्रमेयमात्रे शब्दस्योत्तम द्धप्रयुक्तस्य सामर्थ्यमवगच्छति[3]। न च वाच्यं[4] कार्यस्य केवलस्य शब्दशक्तिविषयत्वेऽपि सिद्धार्थस्य ाना- न्तरसंभिन्नस्यैव तद्विषयता इति। तत्र तावत् कार्यवाक्यगतसिद्धपदानि मानान्तरासंभिन्नेऽर्थे[5] शक्तिम न्ति, कार्यवाक्यगतत्वात्, कार्यपदवत्। तथा च तद्दृष्ट न्तेन[6] इतरेषामपि सिद्धपदानां तत्साधनीयम्। य ूत्तम- वृद्धस्य र्थोपलब्धिहेतुभूतं मानान्तरं तद्विवक्षोत्प दनद्वारा शब्दप्रयोगे हेतुः, न तु शब्दप्रमेयेऽन्तर्भवति। तच्च बालस्तदावगमिष्यति यदा स्वयमुत्त- मवृद्धो भूत्वा शब्द योगं करिष्यति।

XVI (a). अत्र केचित् चोदयन्ति। व्यर्थोऽयं व्युत्पत्ति- निरूपणप्रयासः, शब्दस्यार्थासंस्पर्शित्व त्। न हि 'अङ्गुल्य[7] हस्तियूथ- शत ास्ते' इत्य दिशब्दैः कश्चिदर्थः मीयते। यत्राप्य क्ये ीयते तत्रापि मानान्तरनिबन्धना सा मितिः, न शब्द- निबन्धन इति।

XVI (b). तदेत ोद्यं प्राभाकरः परिहरति। यद्यपि पौरुषेय- वाक्यैः न अभिधेयसंसर्गः[9] प्रमीयते, [तथापि 'एवमयं पुरुषो वेद' इति वक्तृज्ञानविशेषः मीयत एव; अङ्गुल्य दिवाक्येष्वप्य[10]व्यभि- चारात्। स च[11]]ज्ञ नविशेषो ज्ञेयविशेषं कल्पयति ति।

XVI (c). सोऽयं परिहारोऽनुपपन्नः, वैयधिकरण्यात्; शब्द- स्यार्थसंस्पर्शित्वे चोदिते लिङ्गस्य तत्संस्पर्शित्वं तिपाद्यत इति किं केन

---

१. T : अवगम्
२. Ś : मानान्तरमि श्रि
३. T : अधिगच्छति
४. T omits च्यं
५. P : मा ान राभिन्ने
६. P : द्वत् तेन
७. T omits
८. Ś : ा ा : रिहरन्ति
९. C : भि ाभिधे संर्गः
१०. C omits पि
११. P omits words withi brackets

सङ्गच्छेत[1] ? वक्तृज्ञानद्वारा शब्दार्थसंस्पर्शः तिपाद्यत इति चेत्, न; वक्तृज्ञानस्य शब्दप्रमेयत्वायोगात्; 'गामानय' इत्यादिवाक्येषु वक्तृज्ञानवाचकपदाभावात्, वाक्यार्थस्य पदार्थानतिरेकात्[2]। अतिरेकेऽपि किं[3] वक्तृज्ञानमात्रं वाक्यार्थः? उत ज्ञेयविशिष्टम्? आद्ये लौकिकवाक्यादप्रमिते ज्ञेये व्यवहारो न स्यात्। ततो व्युत्पत्त्यभावात् वैदिकवाक्यस्याप्यबोधकत्वप्रसङ्गः। द्वितीये ज्ञेयमेव वाक्यात मीयताम्[4] वक्तृज्ञानस्य शब्द योगलक्षणलिङ्गानुमेयतया अन्यथासिद्धेः।

XVI (d). ननु ज्ञेयमप्यन्यथासिद्धम्; श्रोता हि पदेभ्यः पदार्थानवगत्य 'नूनमेषां संसर्गोऽस्ति' इति सहप्रयोगबलात् उत्प्रेक्षते। इति चेत्, मैवम्; उत्प्रेक्षाया एवात्र वाक्यजन्यप्रमितित्वात्। न तावदियमुत्प्रेक्ष स्मृतिसंशयविपर्यासेष्वन्तर्भवति; संस्कारजन्यत्वकोटिद्वयबाधानामभावात्[5]। प्रमितित्वेऽपि त्यक्षादि ारणान्तराभावात् वाक्यजन्यत्वं परिशिष्यते। न च वक्तृज्ञानेनानुमितेन ज्ञेयमन्तरेणानुपपद्यम नेन पदार्थसंसर्गः ल्पयितुं शक्यः। तथ सति वेदे वक्तुरभावात् संसर्गप्र मित्यसिद्धेः। तस्मात् ब्दमेव संसर्गज्ञानम्।

XVI (e). अङ्गुल्य ादिव क्यानां तु अनाप्तसंसर्ग दर्थास्पर्शित्वम्[6]। अर्थसंस्पर्शिनोऽपि[7] प्रत्यक्षस्य कारणदोषे सति शुक्त्याद्यर्थासंस्पर्शित्वदर्शनात्। न ह्यपौरुषेयस्याद्वैतागमस्य कश्चिद्दोषसंसर्गः संभवति, येन अर्थासंस्पर्शित्वमाशङ्क्येत। यदि द्वैतावभासीनि प्रत्यक्ष र्नि तेन विरुध्येरन्, तदा न्येव बाध्यन्ताम्[10]; 'इन्द्रो मायाभिः'[11] इत्यादिना मायाख्यदोषजन्यत्वश्रवणात्, दोषजन्यत्वेऽपि स्वप्नवद्व्यवहाराविसंवादे प्रामाण्यलाभात्। अद्वैतागमोऽपि प्रत्यक्षादिविषयस्य[12] द्वैतस्य

---

१. C: गच्छते
२. C: दार्थ नतिरे ात्
३. P omits किं
४. C: प्रमीयते
५. C: ोटिद्वय धना भवात्
६. Ś, C: र्था स्पर्शित्वम्
७. C: अर्थास्पर्शिनोऽपि
८. All except Ś insert इति
९. C: दापि
१०. C: ध्यन्ते
११. Bṛh., II-v-19
१२. T omits आदि

तत्त्वांशमेव धत्ते, व्यवहारसं दांशम् । एवं च सति यथ माया-
र्याणामपि त्यक्षादीनां स्वस्वविषयेषु व्यावहारिकपदार्थेषु माण्यम्, तथैव द्वैत ग स्य याक र्यत्वेऽपि अद्वैते स्वविषये प्रामाण्यं किं स्य त् ? न चैवं शु क्तिरजतादिज्ञानेऽतिप्रसङ्गः शङ्कनीयः; तत्रापि यावद्बाधं प्रातिभासिकेषु रजतादिषु नस्य स्व : यानि रणात्, अन्यथ प्रवृत्त्यनुपपत्तेः; [1]विशेषदर्शनकालीनब पर्यालोचनयैव अ ण्यव्यव-[2]हारात् । न चाद्वैतज्ञानस्य दाचि धोऽस्ति येनैतादृश -ण्यमुच्येत ।

XVI (f). ननु चित्रगतनि नोन्नतविषयचाक्षुषज्ञानस्य विषय-गतश्यामादिरेख संनिवेशविशेष ख्यात् दो द् माण्यं यथ ' थ अत्राप्यद्वैताख्यात् विषयदोषाद् मा यम् । ति चेत्, न; त्रापि [3] शे-न धादेव म य त् । अनधिगतार्थगन्तृत्वलक्षणस्य माण्यस्य न संवादापेक्ष शङ्कितुमपि श य ।

XVII. न च यस्य सर्वस्य क्रियार्थत्वात् विधिव क्यानामेव माण्यमिति वाच्यम्; इतरेतर श्रयत त्, विधिवाक्य नामेव ण्ये सिद्धे सर्वस्य नायस्य क्रियार्थत्वसिद्धिः तत्सिद्धौ च इतरसिद्धिः इति

XVIII. न च ' वृत्तिनि त्तिसाध्ययोरि प्राप्त्यनि परिहारयो-रभावाद् रु र्थे णि कथं वेदान्तप्राम यम्?' इति शङ्कनीयम् । लो को[4] हि इ प्त्यनि परिहारावेव स क्षात् र्थयते, न प्रवृत्तिनिवृत्ती, तयोर यासात्म त्वात् । अप्राप्तप्राम दि [5] अपरिहृतरोगादिपरिहारे च अ यासमन्तरेण अभिलषित सिद्ध्यभ वात् अ यासं पुरु : हेतापि । यत्र तु मेव कण्ठचामीकरादिकमजान नः पुरुषः नैः प्तुमिच्छ ति, रि-हृतमेव [6]च रज्जु र्पा दि ' परिजिही ति, तत्र त्रादभी सिद्धौ कुत

1. P : या त्काली ध
C : उत्तरका गी ध
2. Ś : अ ण्यं विं न र त्?
3. Ś : र र शी
4. Ś, P, C : पुरुषो हि
5. Ś omits both र : a d :
6. Ś omits

आयासं सहेत ? न हि तत्रायासोऽपेक्ष्यते ; प्रत्युत ज्ञ ने सति पूर्वोऽप्य - यासः परिह्रियते । एवं च सति नित्य ह्रस्य णः ा ौ नित्य-निवृत्तस्य संसारस्य परिहारे च हे भूतं तत्त्वज्ञानं जनयतां वेदान नां कुतोऽपुरुषार्थपर्यवसायित्वशङ्क ? स्मात् वेदान्तानां[1] ह्मणि माण्यं केनापि व रयितुं न शक्यम् ।

XIX. किं च पुरुषार्थस्य म ण्यप्रयोजकत्वे नित्यनैमित्तिक-वाक्य नां प्राम यं गुरुमते दुःसंपादम् । न हि तत्र फलमस्ति, ि त्वनु ने प्रयास एव; अननुष्ठाने तु त्यवायः स्प : । ततः उभयथा-प्यनर्थहेतूनां[2] तेषां थं प्रा ण्यसिद्धिः? तस्मात् प्रत्यक्षादिवत् शब्दस्या-प्यनधिग ाबाधितासन्दिग्धार्थबोध त्वमात्रं माण्य[निमित्तम्[3] । त र्यत्र व क्ययोः समानम् । तथ च सति पूर्वपक्षिण वेदान्तानां अ ण्य]सिद्धये महता या न यद्विधिपरत्वकल्पनं तदका डे त ड-वितम् । तस्मात्सिद्धं णि वेद न्तानां[4] प्रामा यम् इति ।

इति अष्टमवर्णकम्

. P : ा ण्यं न केनापि ारयितुं व म्

२. P, Ś omit अपि

३. P omits words within brackets

४. P : वेदान प्रामाण म्

## नवमवर्णकम्

I. शब्दानां सिद्धार्थे शक्तिमङ्गीकृत्य पि णि वेदान्तप्रा । यं न संभवतीति ये मन्यन्ते तेषां मतं पूर्ववर्णके निरस्तम् । ये नः ार्यान्वि एव स्वर्थे[1] शब्दशक्तिरिति मन्यमानाः कार्यशेषतयैव ब्र वेदान्तैः प्रमीयते इति कथयन्ति, तेषां म मस्मिन् वर्णके निरस्यते ।

II. ते ह्येवमाहुः । उत्तमवृद्धेन 'गामानय' इत्युक्ते अनन्तरं मध्यम द्धेन क्रियमाणं गवानयनं व्युत्पित्सुः दृष्ट्वा[2] 'गवानयनकार्यमनेन वाक्येन बोधितम्' इत्यवगत्य पुनः 'अश्वमानय, गां बधान' इत्यादि योगेषु आवापोद्धाराभ्यां एकै स्य पदस्य ार्यान्वितस्वार्थे सा र्थ्यं प्रतिपद्यते । न चे साधने व्युत्पत्तिः संभवति; अतीते इ साधनद[3] मध्यम द्ध स्यभ वात् । कृतियोग्ये इ स धने प्रवृत्तिः अस्तीति चेत्, त व्यभिचारात् कार्यमेव व्युत्पत्तिप्रयोजकं भविष्यति । अव्यभिचारित्वमात्रेण ार्यस्य प्रयोजकत्वे र्यगतलौकिकत्वस्याप्यव्यभिचारात्, व्युत्पत्तौ योजकत्वं प्रसज्येत; तथ च वेदे नियोग तिपत्तिर्न स्यात्; इति चेत्, न; र्यं परित्यज्य अन्वितस्वार्थमात्रस्य प्रयोजकत्वाङ्गी रे[4] 'केन अन्वितः' इति स ाङ्क्षत्वप्रसङ्गात् । न चैवं[5] लौकि त्वपरित्यागे ब धोऽस्ति । ननु सिद्धपदा ां र्यान्वितस्वार्थसंभवेऽपि कार्यपदस्य न तत्संभ ः, ार्य न्तराभावात् । इति चेत्, न; धात्वर्थस्यापि र्यतया तदन्वितनियोगे ार्यपदस्य व्युत्पत्तेः । यद्यपि लोके 'फलितो द्रुमः' इत्यादिवा यानि ार्यरहि ान्यपि युज्यन्ते, तथापि तत्र 'तं पश्य[6]' इत्यादि र्याध्य हारोऽवगन्तव्यः, कार्यान्विते[7] व्युत्पन्नस्य पदस्य कार्य-

---

१. C omit ा न्वित ए स्वार्थे
२. S, C read दृष्ट्वा; others read ा ो
३. B : भ ात्
४. C : ङ्गी ारे ान्वि त इति
५. Ś alone ins rts एवं
६. C : श्येत्
७. Ś : कार्यान्तरे

न्तरेणाबोधकत्व त्। अतः वृत्तिनि त्तिस ध्य योजनमन रेण वा य-प्रयोग पपत्तेः नियोगनि वेदान्तः। न च रज्जुसर्प ण्ठच ी र-दाविव तत्त्वज्ञ नमा ण योजन पलभामहे। न चैतच्छास्त्रीयम्; तथ सति श्र णोत्तरकालीनयोः ननिदिध्यासनयोरविधिप्रसङ्गात्। न च र्वस्य वेदस्य विधिनि त्वे ति ए व मीमांस षोडशलक्षणी स्य दिति ङ्कनीयम्; क्रि याविधि तिपत्तिविधिरूपाभ्यां तद्भेदसिद्धेः। यानि वेद-न्तव य नि ह्मस्वरूप तिपाद ानि 'सदेव सो येदम्'[2] इत्यादीनि नि सर्वाणि 'सोऽन्वे व्यः'[3] इत्यादिविधि ोऽस वात्मेत्या ाङ्क्ष यां तच्छेषतयैव आत्मविशेषं समर्पयन्ति। तस्म त् अनन्यशेषाद्वितीयप्रति-ादकत्वं वेदान्तानां नास्ति ति।

III (a). अत्रोच्यते। न त वत् नियोगत्र णी उभे अपि वेदान्तैः ा श येते, विरुद्धत्रिकद्वयापत्ति सङ्गात्; त थमसूत्र-द्वितीयवर्णके विस्तृतम्। नापि नियोगमात्रं मातुं शक्यम्, विधेयानि-रूपणात्

III (b). न तावत् शाब्दं ह्मज्ञानं विधेयम्; तस्यापा तिकस्य अध्ययनादेव निष्पत्तेः; निर्णयश्च विचारजन्यः; अन्यथा अ िहोत्र दि-ज्ञानस्यापि तद्वाक्य ध्ययनतद्विचार भ्यामसिद्धिप्रसङ्गात्।

III (c). नापि शब्दावगते ण स्मृतिसन्तानो विधेयः; तद्विधेरदृष्टफलत्वे स्वर्गादिवन्मोक्षस्यापि मजन्यत्वेन नित्यत्वप्रसङ्गात्। अथ ङ्गमर्दनप्रत्राहेण शरीरे सुख वाहोत्पत्तिवत् अभी विषयस्मृति-सन्तानेनापि सुखसन्तानो ट फलं भवेत्; तद्न्वयव्यतिरेकाभ्यां त्सिद्धेः विधिवैयर्थ्यम्। अस्तु तर्हि स्मर्यम णस्य साक्षात्करणं स्मृति-

---

१. Ś : : Ś too omits अपि but re d ॰ instead of मै
२. Chānd., VI-ii-1
३. Chānd., VIII-vii-1
४. P omits ।ति स्य
५ P omits अपि
६. C : अनित ा यात्
७. C : सुखोत्पत्ति ा त्

न्त नविधेः योजनम्; इति चेत्, तद पि f स्मृतिसन्तानः स्वयमेव क्षात्कारं जनयेत्, उताह रा, अथ वा विज्ञान न्तरद्वार ? नाद्यः। न हि स्मृतिरूपस्य परोक्षज्ञानस्य सन्तानो विषयसाक्षात्कारं जनयितु - त्सहते; अन्यथा अनु नज्ञानसन्तानोऽपि अनुमेयसाक्षात रमुत्पादयेत्। द्वितीयेऽपि न वत् स्मृतिसन्तानजन्यमदृ मात्रं क्षात रोत्पादने प्रभवति, साक्षात्कारस्य माणजन्यत्वात्। प्रमाणेनैव साक्षात्कारोत्पत्तौ अ. वैयर्थ्यम्। न तृतीयः, 'स्मृतिसन्तानजन्यं तद्विज्ञानान्तरं स्वयमेव साक्षात रजनकं उताह द्वारा?' इत्यादिवि ल्पदोषप्रसङ्गात्[1]।

III. (d). ननु तर्हि शब्दावगते ब्र णि ध्यानं विधीयताम्। न च स्मृतिसन्त न एव ध्यानम्, स्मृतिसन्तानस्य वस्तुगोचरत्वात् ध्य नस्यारोपि विषयतय पि संभवात्। न च योजनाभावः, ब्र ापरो-क्ष्यस्य [[2]योजनत्वात्। दृश्यते हि ध्यान भ्या प्रचयस मर्थ्यान्मृत-पुत्राद्यापरोक्ष्यम्। न च तद्वदेव परोक्ष्यस्य] भ्रान्तत्वप्रसङ्गः; शब्द म णसंवादसद्भावात्; स्वप्नवस्तु[3]साक्ष त्कारस्यापि[4] कस्यचिज्जा-गरणज्ञानसंवादे प्रा ण्यदर्शनात्।

III (e). नैतत्सारम्, स्वतःप्रामाण्य[5]ानिप्रसङ्गात्। न च स्वप्ने चक्षुरादि त्तिमन्तरेण वस्तुसाक्षात्क रः संभवति। जागरणसंवादस्तु ादृश्यादुपपद्यते।

III (f). अथ स्मृतिसन्तानध्यानयोरविधेयत्वेऽपि शाब्दज्ञा-न न्यदेव ज्ञानं अलौकिकं श्रवणमननादिकरणकं वेदानुवच ादीति-कर्तव्यत ापरोक्ष्यफलकं[6] मोक्ष ामः यात् इति विधीयते। इति चेत्, मैवम्; वेदान्तानां मापके विधेयज्ञ ने प्रामाण्य ल्पन त् ब्रह्मण्येव साक्ष र य ल्पनाय लघीयस्त्व त्। न च विधिसंस्पर्शित्वं

---

१. T: वि ल्पे दो प्रस ात्

२. P omits the words within brackets

३. C: र प्ने स्तु

४. C inserts र ापि

५. C omits गैवि

६. C inserts मो ल्कं

ामाण्यकारणम् , किं तु प्रमितिजन म् ; अन्यथ अग्निहोत्रादिवाक्यं दर्शपूर्णमासविधिनि मपि स्यात्, विधिसंस्पर्शाविशेषात् । प्रमितिश्च सत्यज्ञानादिवाक्येभ्यो येव जायते, न विधे[1] । न च लौकिकात्प्राम यादन्यदेव वैदिकं प्रामाण्यं विधिसंस्पृष्टमिति शङ्कनीयम् । यथा शब्दार्थ य एव लौ का: त एव वैदिका:, तथा प्रामा यस्यापि लोकवेदयोरेकत्वात् । तदेवं वेदान्तेषु न कश्चि द्विधेयं निरूपयितुं शक्यम् ।

IV. न पि नियोग: निरूप: । लोके ह्याचार्य: शिष्यं नियुङ्क्ते त्य ्. वुत्कृ स्य पुरुषस्य अवरपुरुषप्रेरणात्मकोऽभिप्र यभेदो नियोगत्वेनाभि त: । न चासावपौरुषेये वेदे संभवति । ननु नियोगो नाम वर्त :; प्रवर्त त्वं[2] कार्यबुद्धिग ये वस्तुनि तिष्ठितम् । इति चेत्[3], ˆमिदं क यं ना ? किं कृतिसंसृ म्, किं वा कृतियोग्यम्, अथ वा कृतियोग्यत्वे सति क्रियाकार फलविलक्षणं किञ्चिदलौवि म् ? नाद्य:; कृतिर्हि रुष त्ति:, कार्यं च त्तिनिमित्तम् ; न च प्र त्तिसंसृ स्य त्ति निमित्तत्वं संभवति, अंशत आत्माश्रयत्वात् । न द्वितीय:; दु:खसाधनानामपि कृतियोग्यतया कार्यत्वे सति वर्त त्वप्रसङ्गात् । न तृतीय:, तस्य प्रत्यक्षाद्यगोचरस्य व्युत्पत्त्ययोग्यस्य शब्द तिपाद्यत्वासंभव त् । न च परा भिमतक र्यानङ्गीक रे प्रवर्तकाभाव:, कृतियोग्ये स धनस्य वर्त त्वात् । कृतियोग्यत्वविशेषणोपादानात् न चन्द्रोदय दौ व्यभिच र: । यद्यपि कृतियोग्यस्य फलस्यापि प्रवर्त त्वस्ति, तथा पि बालस्य व्युत्पत्तिनिमित्ततया मध्यम द्धप्रवृत्तिहेतुभूतं गवानयनादिलक्षणमिष्टसाधनमेव । अतश्च येयं महता य सेन कार्यव्युत्पत्ति: धित सा नास्माकमनि ा, इ साधनस्यैव कृ तियोग्यस्य ार्यत्वाभ्युपगम त् । एकमेव हि वस्तु कृतिनिरूप्यतय ार्यमित्युच्यते, ˎनिरूप्य या च इ साधनमिति । न च पराभिमत लौकि ार्ये व साधनेऽपि कृतियोग्येऽननुभूते णाभाव: शङ्कनीय:: अतीतेष्वन्न-

१. Ś, C insert

२. C inserts न

३. Ś : ार्ये व्युत्पत्ति:

पानादिषु अन्वयव्यतिरेकाभ्यां इष्टसाधनत्वमवगत्य अनागतेष्वपि तेषु तदनुमानात् । न चैवं परकीयकार्यमनुमातुं शक्यम्, अलौकिकत्वव्याघातात् । तस्मात् कृतियोग्येष्टसाधनमेव विध्यर्थो न तु नियोगः ।

V. न चैतादृशोऽपि विधिः वेदान्तेषु संभवति । तत्र अविद्यानिवृत्तिलक्षणो मोक्ष इष्टः; तस्य च ाधनं ात्मैक्यतत्त्वज्ञानम् । सोऽयं स ध्यसाधनभावो लोकसिद्धः, शुक्तितत्त्वज्ञानेन तदविद्यानिवृत्तिदर्शनात् अतः तद्विधिपरत्वे वेदान्तानामनुवादकत्वप्रसङ्गः । ननु सिद्धे व्युत्पत्त्यभावात् ब्रह्मपरत्वमपि न संभवति; इति चेत्, न; 'भिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यादौ अप्रसिद्धमधुकरपदार्थस्य पुरुषस्य प्रसिद्धपदसमभिव्याहारेण सिद्धार्थेऽपि व्युत्पत्तिदर्शनात् । न च तत्र कार्याध्याहारः कल्पनीयः, योजनप्रमाणयोरभावात् । न च व्युत्पत्तेः क र्याव्यभिचारः प्रयोजनम्; तस्यैवाद्य ध्यसं तिपत्तेः । स्माद् ब्रह्मण्येव वेदान्तप्रामा यम् ।

VI. अत्र केचिन्मन्यन्ते । न खलु जीवब्र णोरैक्यमस्ति; 'अथ यदतः परो दिवो ज्योतिर्दीप्यते'[२] इति ज्योतिःशब्दाभिधेयस्य ब्र णो ब्रह्मा डाद्बहिरवस्थ नश्रवणात् । यदि सर्वगतत्वश्रुतिः प्येत, तर्हि सर्वत्र वर्तम नमपि ब्रह्म जीवैर्वा प्रप ेन वा न संस्पृश्यते, 'असङ्गो ह्ययं पुरुषः'[३] इ ति श्रुतेः । 'अहं ब्र ास्मि'[४] इति श्रुतिस्तु आरोपिततादात्म्यरूपेणोपासनं विदधाति; तस्माच्चोपासनान्मोक्षः फलिष्यति यागादिव स्वर्गः । न च वेदान्ताना पासनाविधिपरत्वे ब्रह्मस्वरूपासिद्धिः; देवताधिकरणन्यायेन मान न्तरसिद्धत्वतद्विरोधयोरभावे स्वार्थेऽपि प्रामाण्यसंभवात् । न च जीवाद्भिन्ने ण्यद्वैतश्रुतिव्याकोपः; तस्याः श्रुतेर्विकारातीतब्रह्मविषयत्वात्; तस्य च एकत्वाभ्युपगमात् । न च नैयो-

१. C omits स्व
२. Chānd., III-xiii-7
३. Bṛh., IV-iii-5
४. Bṛh., I-iv-10
५. Ś: 'भ ति
६. B: ानान्तरतद्विरोधयोः;
T, V: ानान्तरसिद्धिविरोधयोः

गिकफलत्वे मोक्षस्य स्वर्गादिवदनित्यता, 'न स पुनरावर्तते'[1] इति श्रुत्या अनुमानस्य बाधात् इति ।

VII. नैतत्सारम्[2]; आद्यन्तशून्यस्य मोक्षस्य उपासनात् क्रियासाध्यत्वायोगात् । 'विमुक्तश्च विमुच्यते'[3] 'ब्रह्मैव सन् ब्रह्माप्येति'[4] इत्यादिश्रुतिर्मोक्षस्यानादित्वमाह । 'विद्ययामृतमश्नुते'[5] 'ब्रह्मसंस्थोऽमृतत्वमेति'[6] इत्यादि च अविनाशितां प्रतिपादयति । तथा तदनुग्राहको न्यायोऽप्यनुसन्धेयः । सादित्वे च मोक्षस्य अन्तवत्त्वं स्यात् । अन्तवत्त्वे च पुनर्बन्धात् मोक्षशब्दस्य उपचरितार्थत्वप्रसङ्गः । तथा क्रियासाध्यत्वे अभ्युदयफलवत् शरीरेन्द्रियादिसम्बन्ध उपचयापचयत्वं च केन वार्येत? कर्मफलस्य वैचित्र्यदर्शनात् शरीरादिरहितो मोक्षोऽपि कर्मफलं भविष्यति; इति चेत्, न; शरीरादिराहित्यस्य स्वाभाविकत्वात् । तथा हि । न तावदात्मनो देहेन संयोग उपपद्यते, निरवयवत्वात्; नापि समवायः; देहं प्रति समवायिकारणत्वाभावात् आत्मनः; एवं तादात्म्यादिनिराकरणमूह्यम्; अतो वास्तवसम्बन्धाभावे सति अशरीरत्वं स्वाभाविकं सशरीरत्वं तु मिथ्याज्ञानकृतं इत्यभ्युपेयम् । न च मिथ्याज्ञानं कर्मभिर्निवर्तते । नाप्यशरीर एव मोक्षः कर्मभिरन्यथा[10] परिणम्यत इति वक्तुं शक्यम्, कूटस्थस्य परिणामायोगात् ।

VIII. नन्वेवमपि उपासनासाध्यत्वमात्रेण मोक्षस्य कथं पञ्चपादिकाप्राप्तिः[11]? इति चेत्, उच्यते । तत्रोपासनस्य[12] स्वरूपतः संख्यातः फलतो वा परिमितिरस्ति न वा? न चेत्, तदनिर्धारितविशेषस्योपासनस्य अनुष्ठानमशक्यं स्यात् । अस्ति चेत्, तर्हि[13] सा प्रदर्शनीया ।

---

१. Chānd., VIII-xi-1
२. C : नैतत्सारम्
३. Katha., V-1
४. Bṛh., IV-iv-6
५. Īśa., 11
६. Chānd., II-xxiii-2
७. C drops आदि
८. T : व्यैते
९. C omits ‍‍
१०. Ś adds another न्यथा
११. C : उ । ादि ाहि:
१२. C :
१३. C omits तर्हि

न हि साङ्गदर्शपूर्णमासपरिमितिवत् एतावदिदमित्युपासनास्वरूपपरिमितिः प्रदर्शयितुं शक्यते। न च संख्यातः परिमाणमस्ति, सहस्रं लं वा प्रत्ययानां मोक्षसाधनमित्येतादृशस्य नियामकस्यादर्शनात्[1]। नापि कालतः परिमाणमस्ति एकं शतं सहस्रं वा संवत्सराणा पासीनस्य मोक्ष इति नियमप्रमाणाभावात्। मरणमेवावधिरिति चेत्, तथापि दर्शपूर्णमासवदेकाकारा साधनपरिमितिर्न लभ्यते; एकेन शतेन सहस्रेण व कालेन कस्यचिन्मरणात् पुरुषभेदेषूपचयापचयप्रसङ्गात्। उ ास्यापरोक्ष्यमवधिः इति चेत्, तथापि कस्यचित्केनचित् लेनापरोक्ष्यात् साधनोपचयापचयौ तदवस्थावेव; अतः तत्फले मोक्षेऽप्युपचयापचयौ दुर्वारौ; लोके वेदे च क्रियातारत यात् तत्फलेऽपि तारतम्यदर्शनात्। न चोपमनैकरूप्याभावेऽपि फलैकरूप्यं शास्त्राद्भविष्यतीति शङ्कनीयम्; शास्त्रस्यान्यथाऽप्युपपत्तौ[2] न्यायविरुद्धकल्पनायोगात्। अतो यत्कृतकं तदनित्यमित्यादिन्यायानुसारेण अनित्यत्वादि मोक्षस्य ाप्नोति।

IX. यत्तूक्तमपुनरा त्तिश्रुतिबाधितोऽयं न्याय इति, तदसत्। तत्र किं 'ब्रह्मलोकमभिसंपद्यते, न स पुनरव ते'[3] इत्येषा ुतिर्ब धि । उत 'एषैव देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते'[4] इत्येषा श्रुतिः? नाद्यः, अप्रसक्त तिषेधात्। न हि लोकाभिसंपत्तिसमये पुनरावृत्तिः प्रसक्ता। अथ न स पुनरावर्तिष्यते इति वाक्यार्थः कल्प्येत, तन्न। 'तद्यथेह कर्मचितः'[5] इत्यादिश्रुत्या अनुमानेन च विरोधे सति श्रुतार्थपरित्यागेन अश्रुतार्थकल्पनासंभवात्। द्वितीये तु 'इमम्' इति विशेषणं मानवान्तरे पुनरा त्तिं दर्शयति। नन्वस्मिन् कल्पेऽना त्तिं प्रतिपादयतो वाक्यस्य कल्प न्तरे पुनरा त्ति तिपादनेऽपि तात्पर्ये वा यभेदः; इति चेत्, न; पुनरावृत्तेरार्थि त्वात्; अन्यथा सर्वत्र सविशेषणवाक्येष्वस्य चोद्यस्य दुरुत्तरत ात्[6]। नन्वेषा श्रुतिः कल्पे

---

१. C : निया र ाभावात्
२. T, V : न थानुप ौ
३. Chānd., VIII-xv-1
४. Maitri., VI-30
५. Chānd., VIII-i-6
६. T, V : दुष्परिहरत्वात्

कल्पे प्रवर्तमाना तत्र तत्र अ त्तिं निषेधति,[१] तोऽर्थादना चैरात्य न्तिकत्वसिद्धिः। इति चेत्, न, प्रतिपत्तृभेदात्। अ िमन् ल्पे तिपन्नानां आगामिकल्पे पुनर त्तिः, तत्र प्रतिपन्नानां तत उपरिकल्पे पुनरावृत्तिः इत्यभ्युपेयम्; अन्यथ विशेषणवैयर्थ्यात्।

X. नन्वस्तु तर्ह्यनित्य एव मोक्षः, अनित्यस्यापि स्वर्गादेः पुरुष र्थत्वदर्शनात्; तथा चोपासनाक्रियासाध्यो मोक्षो भविष्यति। ति चेत्, ि न्यायानुसारेणैव च्यते,[२] किं वा श्रुत्यनुसारेण? नाद्यः, न्यायवित्त्व भिमानिभिरेव सांख्ययोगवैशेषि नैयायिकबौद्धादि भिः सर्वैः[३] स्वस्वप्र ि यानुसारेण अनादि मिथ्याज्ञानस्य तत्त्वज्ञ नेन नि त्तौ मोक्षो भवति, स च नित्यः, इत्येवाङ्गीकारात्। न द्वितीयः, 'य एवं वेद अ ास्मि इति स इदं सर्वं भवति',[४] 'तद्धैतत्पश्यन् ऋषिर्वामदेवः तिपेदे',[५] 'त्वं हि नः पिता योऽस्मा मविद्य याः परं पारं रयसि',[६] 'भूयश्चान्ते विश्वमायानि त्तिः',[७] 'य एत द्विदुरमृतास्ते भवन्ति' इत्याद्य : श्रु यो त्मत्वदर्शनसमकालमेव अ विद्या निवृत्तौ अविन शिनं मोक्षं दर्शयन्त्यो न क्रियानु वेशशङ्कामपि सहन्ते।

XI. ननु 'अहं ब्र ास्मि' इत्यादिशास्त्रं न ब्र त्मै त्वपरम्; किं तु जीवविलक्षणे माणान्तराविरुद्धे ब्रह्मणि शास्त्रप्रतिपन्ने संपद्ध्याक्रियायोगसंस्कारेषु अन्यतमपरं भविष्यति। तत्र संपद् ना अल्पे वस्तुन्य ल बने महद्वस्तुदर्शनम्; यथा अल्पे मनसि त्यनन्तत्वसा येन अनन्तविश्वेदेवसंपादनं कृत्वा अनन्तलो जयः, 'अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति'[१०] इति श्रुतेः। तथा जीवे चिद्रूपसा येन ब्रह्मरूपसंपादनं कृत्वा ब्र फलमवाप्यते। अध्य सस्त्वन्यस्मि न्य ष्टिः[११]; यथा 'आदित्यो ब्र '[१२] इति श्रुतिवशात् अ रूप-

---

१. Ś : निषेध इति
२. P : इद च्यते
३. P, Ś and C insert अपि
४. Bṛh., I-iv-10
५. Bṛh., I-iv-10
६. Praśna, VI-8
७. Śvet, I-10
८. Bṛh., IV-iv-14
९. Ś : ह्यैकत्व
१०. Bṛh., III-i-9
११. T, V : अन्यत्र दृष्टिः
१२. Chānd., III-xix-1

आदित्ये ब्र दृ ि:; तथात्राप्यब्र रूपे जीवे दृ ष्टिः । तत्र[1] आल बन-मविद्यमानसमं कृत्वा स पाद्यस्यैव प्राधान्येन चिन्तनं संपद् ; आलम्बन-स्यैव ाधान्येन चिन्तनमध्यास इति तद्विवेकः । क्रियायोगस यथा ' ायुर्वाव संवर्गः'[2] इति श्रुतौ अग्न्यादीन् संवृणोती ति संवरणक्रिय -सम्बन्धात् वायोः[3] संवर्गगुणत्वेनोपासनं तथा जीवस्य स्वगतेन बृहत्यर्थ-योगेन ब्र गुणतयोपासनम् । संस्कारश्च माङ्गस्य व्री ाज्यादेः[4] गोक्ष-णावेक्षणादिन यथा भवति, तथ कर्तृ या कर्मगुणभूतस्यात्मनो -दृष्ट्या[5] संस ारः क्रियत इति ।

XII. नै त्सारम् । ि जीवब्रह्मभेदप्रतिभासविरोधभयात् संपद दिपरत्वं वेदान्तानां कल्प्यते, किं वा जीवब्रह्मैक्ये तात्पर्याभावात्, उत फलानुसारात् ? नाद्यः, अभेदेऽपि ि ब ति बिम्बवत् भेदप्रतिभासो-पपत्तेः । न द्वितीयः 'अहं ब्र ास्मि ' इत्युक्तस्यैक्यस्य ' स ए इह वि ः'[6] इति वेशार्थवादेन[7] 'अथ योऽन्यां देवता पास्तेऽन्योऽसाव-न्योऽहमस्मि इति न स वेद'[8] इति भेदनिन्दया चोपपादितत्वात् । एवं[9] सर्वश्रुतिष्वप्यैक्यतात्पर्यलिङ्गप्रवेशादिकमवगन्तव्यम् । न तृतीयः । अवि-द्यानि त्तिः ब्र ात्मभ वश्च फलं श्रूयते । न च संपद दिपरत्वे तदुपपद्यते; संपदादीनां अयथावस्तुत्वेन अप्रमाणज्ञानानां अविद्यानिवर्तकत्वासंभवात्; अन्यस .ान्यात्मत्वविरोधाच्च । तस्माद् यपरं शास्त्रम् ।

XIII. अत्र श्चिदाह ब्रह्मणो भिन्नाभिन्नो जीवः । ततश्च ब्र णो नित्यमुक्तता जीवस्य नित्यबद्धता च व्यवस्थामश्नुते । अत्य-न्ताभेदे तु ैव स्वसंसाराय थं जगदुत्पादयेत् ? विरुद्धा च विशुद्ध-स्याशुद्ध ाप्रा पत्तिः इति ।

XIV. अत्रोच्यते । न तावज्जीवब्र णोः जातिव्यक्तिभावः,

---

१. C inserts ए
२. Chānd., IV-iii-1
३. P, Ś : द्वयोः
४. Ś omits आज्य and वे
५. Ç : गोक्षद या
६. Bṛh., I-iv-7
७. C : प्रवेशानुवादेनापि
८. Bṛh., I-iv-10
९. P omits एवं

देसंसर्गासंसर्गाभ्यां व्यवस्था किं न स्यात्? ्स्मिन्नेव वस्तुनि संसर्गस्य भावाभावौ विरुद्धाविति चेत्, न; भेदस्य भावाभावयोरेत्र त्वया अभ्युपगमात्। अभेदो नाम न भेदाभावः, किं तु ऐक्याख्यं धर्मान्तरम्[1]; इति चेत्, तथापि भेदाभेदौ विरुद्धावेव, परस्परनिवर्त-त्वात्। 'अहं मनुष्यः' इति प्रतीतं देहात्मैक्यं 'नाहं मनुष्यः, अपि तु ब्र ास्मि' इत्यनेन देहात्मभेदभानेन[2] निवर्तते; यथा[3] 'द्वौ चन्द्रौ' इति तीतो भेदः चन्द्रैक्यज्ञानेन निवर्तते। अतो विरोधभीतस्त्वं कथं भेदाभेदावङ्गीकृर्वीथाः? तदङ्गीकारे वा ब्र ण्यविद्यासंसर्गौ[4] तयोः बि ब-तिबि बदृष्टान्तेन उपपादयितुं सुशकयोः कस्तव प्रद्वेषः? न चांशभूते जीवे संसारिणि सति अंशिनो ब्रह्मणः तदभावे तवास्ति कश्चित् दृष्टान्तः। न हि वस्त्रैकदेशे देहैकदेशे वा चण्डालसूतिकादिभिरुपस्पृष्टे कृत्स्नौ वस्त्र-देहौ अप्रक्षालनीयौ भवतः। अतो न त्वन्मते ब्र णोऽसंसारित्वम्; त्युत सर्वजीवैः सर्वप्रपञ्चेन[5] चाभिन्नतया सर्वं दोषजातं स्वात्मन्येव पश्येत्। तथा च तादृशब्र प्राप्तेरपुरुषार्थतया शास्त्रारंभादिकमनु-पपन्नं स्यात्। न हि ज्ञानध्यानादिभिः स्वोपाधौ कथञ्चित् विलापितेऽपि अशेषजीवोपाधयः प्रविलापयितुं शक्यन्ते, येन ब्रह्मणि सर्वो दोषः परि-ह्रियेत। अस्मन्मते तु न कश्चिद्दोषः; प्रतिबि बश्यामत्वादीनां बि ब-स न्धादर्शनात्। तत्त्वज्ञानेन सर्वोपाधिविनिर्मोक्षोपपद्यते, स्वप्न-कल्पितवस्तूनां सर्वेषामपि बोधे निवृत्तिदर्शनात्।

XV. शुकवामदेवादितत्त्वज्ञानेन सर्वोपाधिनिवृत्तौ इदानीं संसा-रानुपलब्धिः प्रसज्येत; इति चेत्, न; त्वत्पक्षेऽपि समानत्वात्। एकै-कस्य जीवस्य एकैकस्मिन् कल्पे क्तावपि अनन्तजीवानां अतीतानन्त-कल्पेषु क्तौ कथं संसार उपलभ्येत? अनुभवमवलम्ब्य इदानींतन-संसारसमाधानमुभयोः समानम्। उपपत्तिस्तु एकात्मवादिभिरस्माभिरेव

---

१. C omits अन्तरं
२. Ś, C : ानेन
३. All e cept Ś read था
४. Ś : अविद्या गौसं र्गयोः
५. P : प्र ोधेन

कथंचित् वक्तुं शक्यते । तथा हि । यस्त्वं मां ति बन्धमोक्षव्यवस्थां पृच्छसि स त्वमेक एव सर्वकल्पनाधिष्ठानभूतश्चिदे रस आत्मा ; त्वदन्ये क्ता मुच्यमाना मोक्ष्यमाणाश्च सर्वे जीवाः त्वदविद्यया स्वप्न व कल्पिताः । वामदेवश्रुतिश्च त्वत्प्ररोचनाय ब्रह्मविद्य प्रशंसनार्था । एवं च सति कस्य बन्धमोक्षौ इत्येष सन्देहस्तव तावत्संसारदशायां मोक्ष-दशायां वा न जायते । एवं प्रत्येकं[1] तत्तत्पुरुषदृष्ट्या स से[2] एवात्मेति गुरुशास्त्राभ्यां बोधिते सति न कस्यापि सन्देह उदेतीति किमत्र नुपपन्नम् ?

XVI अतोऽखण्डैकरस त्मवादे अनुपपत्त्यभावात् तत्परेण शास्त्रेण आत्मतत्त्वे बोधिते सद्य एवाविद्यातत र्ययोः स्वप्नवत विलीनयोः सतोरद्वितीये ब्रह्मणि संपदादिरूपेण पास्तिक्रियायाः ोऽवसरः? अ एव श्रुतिः ब्रह्मण उपास्यत्वं निषेधति 'यन्मनस न नुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं य दिद पासते'[3] इति । न च वेद्यत्व-वदुपास्यत्वम पि स्यात् इति मन्तव्यम्[4] ; 'अन्यदेव तद्वि दि ाद्थो अविदि-तादधि'[5] इति श्रुत्या वेद्यत्वस्यापि निषेधात् । अवेद्यत्वेऽप्यख डैकरस-ब्र ाकारान्तःकरणवृत्त्या चैतन्याभिव्यक्तियुक्तया शास्त्रजन्यया विद्यया अ विद्यातत्कार्यनिवृत्तेः ब्र णः शास्त्रवेद्यत्व पचर्यते । एतां त्तिं ति सं निधिमात्रेण अखण्डैकरसत्वलक्षणस्वाकारसमर्प तया स्वस्वा[6] रसमर्प -घटादिवद्वृत्तिव्याप्यत्वलक्षणं विषयत्वं ब्र णोऽभि त्य 'मनसैव नुद्र -व्यम्',[7] 'एषोऽणुरात्मा चेतसा[8] वेदितव्यः',[9] 'तं त्वौप निषदं पुरुषम्'[10] इत्याद्याः श्रुतयः प्रवृत्ताः । जडेषु घटादिष्विव प्रमाणकृत-स्फुरणातिशयस्य[11] स्व शे ब्रह्मणि असंभवात् फलव्याप्यत्व भावलक्षण-

---

१. C omits प्रत्येकं
२. Ś, C have only one
३. Kena, 5
४. C : वाच्यम्
५. Kena, 3
६. Ś omits one स्व
७. Bṛh., IV-iv-19
८. T, V omit चेत ा
९. Muṇḍ., III-i-9
१०. Bṛh., III-ix-26
११. Ś : स्फुर लक्षणाति स

मविषयत्वं च[1] 'यतो वाचो निवर्तन्ते'[2] इत्याद्याः श्रुतयः प्रत्यपीपदन् । न चात्र[3]ात्यन्तं फलाभावः[4]; अन्तःकरणवृत्त्यभिव्यक्तत्वोपाधिना ब्रह्मचैतन्यस्यैव फलत्वोपचारात, घटादिविषयस्यैव फलत्वव्यवहारात् । तदुक्तम्—

> परागर्थप्रमेयेषु या फलत्वेन संमता ।
> संविन् सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥[5]

इति । अतो ब्रह्मचैतन्यमुपान्त्यक्षणे अवच्छिन्नतया फलावस्थं भूत्वा चरमक्षणे स्वावच्छेदिकां वृत्तिं निवर्तयति । तत्र उपर्यवच्छेदकाभावात फलावस्थतां परित्यज्य निर्विकल्पकचैतन्यमात्रं मोक्षदशायां परिशिष्यते । एवं च सति नित्यमुक्तं ब्रह्मैव स्वाविद्याप्रतिबिम्बितं सत् जीवभावमापद्य संसरति स्वविद्यया च विमुच्यते इत्युक्तं भवति ।

XVII (a). नन्वेवं जीवस्यैव ब्रह्मत्वे तत्त्वमस्यादिमहावाक्येषु पदद्वयस्य पुनरुक्तिः स्यात; तत्परिहाराय भेदाभेदावभ्युपेयौ । ति चेत्, न; तथा सति वाक्यार्थज्ञानेन शरीरेन्द्रियादिसंसारस्य निवृत्त्यसिद्धेः । तथा हि[6] । किमुपपत्तितः तन्निवृत्तिः साध्यते, उत[7] 'भिद्यते हृदयग्रन्थिः'[8] इत्याद्यागमात ? नाद्यः; त्वन्मते देहादिविशिष्टस्यैव जीवस्य ब्रह्मणा सह भेदाभेदयोः वास्तवयोर्महा[9]वाक्यार्थतया तद्गोचरज्ञानेन देहादिनिवृत्त्ययोगात । न द्वितीयः; वर्तमानापदेशिन आगमस्य योग्यानुपलब्धिविरोधेऽर्थवादत्वात्[10] । अथ मोक्षदशायां देहादिनिवृत्तावागमस्य तात्पर्यं तथापि यदि मोक्षदशायां जीवस्य भेदांशो न निवर्तेत तदा तन्निर्वाहाय देहेन्द्रियान्तःकरणाद्युपाधिरप्यभ्युपेयः; ततो न संसाराद्विशेषः । यदि च

1. Ś omits च
2. Taitt., II-iv 1
3. S omits अत्र
4. Ś : अत्यन्तफलाभावः
5. Sambandhavartika, v 160
6. P omits तथा हि
7. C : किं वा
8. Muṇḍ., II-ii-8
9. Ś omits महा
10. C : अनुवादत्वात्

भेदांशनिवृत्तिः तदापि न तत्त्वज्ञानात्तन्निवृत्तिः, तस्य स्वविषया निवर्तकत्वात्, त्वन्मते भेदस्यापि तत्त्व ानविषयत्वात्। नापि कर्मभिस्तन्निवृत्तिः; आगमविरोधात्; आगमस्य सार्वकालिकभेदाभेदप्रतिपादकत्वाङ्गीकारात्। न च भेदाभेदवादे तत्त्वंपदार्थौ सुनिरूपौ। तत्र कोऽसौ त्वंपदार्थो जीवः? किं भेदाभेदाभ्यां अंशाभ्यामांशी, किं वा अंशद्वयस दायः, उत अंशद्वयमेव? आद्येऽपि यद्यभेदांशो ब्र तद् ब्र णो जीवांशत्वं जीवस्य च सावयवत्वमापद्येत। अथाभेदांशो न ब्रह्म, तर्ह्यत्यन्तभेद एव स्यात्। न द्वितीयः, जीवस्यावस्तुत्वप्रसङ्गात्; स द यिव्यतिरिक्तस दायानिरूपणात्। तृतीयेऽपि किमभेदांश एव जीवः, किं वा भेदांश एव, उत अंशद्वयं प्रत्येकम्, अथ वा अंशद्वयं परस्परमभिन्नम्, आहोस्वित् परस्परमपि भिन्नाभिन्नम्? नाद्यः, ब्रह्मण एव जीवत्वप्रसङ्गात्। न द्वितीयः, अत्यन्तभेदप्रसङ्गात्; तथा च तत्त्वज्ञानमोक्षादिव्यवहारासिद्धिः। न तृतीयः, जीवद्वयप्रसङ्गात्। न चतुर्थः, तदा ब्र ैव जीव इति बन्धमोक्षव्यवहारासिद्धेः। न पञ्चमः, भेदाभेदानवस्था सङ्गात्। कस्य चायं श ास्त्रोपदेशः? न तावदभेदांशस्योपदेशः, ब्रह्मस्वरूपतया तस्योपदेशानपेक्षत्वात्। नापि भेदांशस्योपदेशः, 'अहं ब्र ास्मि' ति प्रतिपत्त्ययोगात्। मोक्षावस्थायामभिन्नतया युज्यते सा प्रतिपत्तिः इति चेत्, न भेदांशस्य पुनरभेदः संभवति, विरोधात्। अविद्यादिदोषोऽपि न तावदभेदांशस्य युक्तः, ब्रह्मण्येव प्रसङ्गात्। नापि भेदांशस्य, उपाधिजननात् प्राग्भेदाभावात्। अथोपाधिमनपेक्ष्य स्वत एव भिन्नोंऽशोंऽशी वा जीवः, तथापि तदंशविनाशे जीवविनाशात् कस्य मोक्ष उपदिश्येत, अभेदांशस्य ब्र णो नित्य क्तत्वात्? मोक्षोऽपि भिन्नाभिन्नश्चेत्, तर्हि 'ब्र वेद ब्र ैव भवति'[1] इत्येवकारविरोधः, संसारादविशेषश्च स्यात्।

XVII (b). न च स्वर्गनरकबन्धमोक्षादिव्यवस्थासिद्धये भेदाभेदावपेक्षितौ; भेदेनैव कथ ित्सिद्धेः। न च तावेकत्र युक्तौ, भेदस्य

---

१. Muṇḍ., III-ii-9

धर्मिप्रतियोगिसापेक्षत्वात्, अभिन्ने चैकस्मिन् वस्तुनि तदयोगात्। शास्त्रं पुनः 'नान्योऽतोऽस्ति द्रष्टा'[1] इति भेदोपमर्देन 'एष त आत्मा'[2] इत्यभेदमेव प्रतिपादयति, न तु भेदाभेदौ। अथ जीवब्रह्मणोः स्वभावाद्भेदः, सत्त्वद्रव्यत्वादिसामान्यद्वारकश्चाभेद[3] इति भेदाभेदौ, तर्ह्यनुमानादेव तदभेदावगतेः[4] शास्त्रवैयर्थ्यम्। तदेवं भेदाभेदवादस्यानेकदोषदु[5]ष्टत्वात्, जीवस्यैव ब्रह्मत्वेऽपि सद्वितीयपारोक्ष्यरूपभ्रम[6]द्वयनिरासाय महावाक्येषु पदद्वयस्योपयुक्तत्वाच्च[7], वाक्यजनिततत्त्वज्ञानेनाविद्यायां निवृत्तायां[8] नित्यसिद्धब्रह्मात्मैक्यरूपमोक्षः परिशिष्यत इति सिद्धम्[9]।

XVIII (a). यस्तु मोक्षस्य नित्यसिद्धत्वमसहमानः तत्साध्यतायै विज्ञाने[10] विधिं कल्पयति, स वक्तव्यः—किं यागादिवत्[11] कर्तृसमवेतापूर्वफलोदयाय ज्ञानं विधीयते, किं वा कर्मकारकगतातिशयफलाय? नाद्यः; अभ्युदयफलवत् मोक्षेऽपि शरीरेन्द्रियसम्बन्धोपचयापचयादि[12]प्रसङ्गेन प्रत्युक्तत्वात्[13]। द्वितीयेऽपि कोऽसावतिशयः? उत्पत्तिर्विकृतिरा[ ]ः संस्कृतिर्वा? न तावदुत्पत्तिः, मोक्षस्य घटादिवदनित्यत्वप्रसङ्गात्।

XVIII (b). अत्र[14] केचिदाहुः उत्पाद्यत्वेऽपि मोक्षस्य नानित्यत्वदोषः, क्रियासाध्यस्यैवानित्यत्वात्, मोक्षस्य ज्ञानमात्रसाध्यत्वात्। न च ज्ञानमात्रसाध्यस्यानित्यत्वं दृष्टम्, स्मृत्युत्पादकसंस्कारस्यापि क्रियासाध्यत्वाभ्युपगमात्। नन्वेवमप्य[15]विद्यानिवृत्तिरेव ज्ञानसाध्या[16], न तु कर्मकारकगतातिशयो[17] मोक्षः; इति चेत्, न; ब्रह्मभावस्यापि तत्सा-

१. Bṛh., III-vii-23
२. Bṛh., III-vii-3
३. P कस्य भेदाभेदौ ; Ś : कस्य भेद इति etc. T, V omit the whole portion from here up to सर्वगत्वमेव in XVIII(c)
४. C : आगतेः
५. P : नैष दोषः
६. P omits भ्रम
७. P, C omit च
८. Ś : निवर्तितायां
९. Ś : स्थितम्
१०. C : विज्ञानविधिं
११ P, Ś omit वत्
१२. P omits अपचय
१३. Ś : प्रयुक्तत्वात्
१४. P : तत्र
१५. C : च for अपि
१६. P : [ ]नस्य
१७. P : [ ]दात्म [ ]स्येव स्[ ]भाविकस्येति चेत्...

ध्यत्वात्; तादात यस्यैव स्वाभ वि त भ्युपगम त् । अत्यन्त भेदो भावः, अभेदमा ं तादात यमिति तद्विवे :। न च विद्यानि त्ति - भावयोरुभयोः[2] .नसाध्यत्वे[3] मानाभावः। 'तरति शो त्मवित्'[4], ' वेद ब्र ैव भवति'[5] इत्युभयविधश्रुतिसङ्ग[6] ात् इति[7] ।

XVIII (c). अत्रोच्यते । किं शास्त्रजनितस यग्ज्ञानेन ब्रह्म-भाववि येण मोक्षः साध्यते, ि वा तादात्म्यविषयेण? न द्यः, भावस्य नित्य सिद्धताप्रसङ्गात् । द्वितीयेऽपि यदि [8]तादात यनिवृत्तेः भ वः साध्येत[9], तद तस्य[10] स्वविषय निवर्त त्वं दर्शितं स्यात् । त दात्म्यं च ज्ञाननिवर्त्यत्वादवास्तवमापद्येत । अनिवृत्ते तु तादात ये अत्यन्ताभेदलक्षणो ब्र भावो न घटते । किं च यदि तादात य-निवृत्तिरेव भावः. ह्यविद्यानिवृत्तिरेव मोक्ष इत्युक्तं स्यात् । अथान्यो भ वः, तदा ब्र भावात् तादात याच्चान्या तादात[11]ये-नि त्तिर्निरूपणीया । न चासौ जीव ह्मणोरत्यन्तभेदव्यतिरेकेण निरूप । अत्यन भेदश्च[12] भव । नाङ्गीकृतः । श्चायं ब्र भ वो न ? विं ब्र ैव, ि वा जीव एव, उत न्यः? नाद्यौ[13], असाध्यत्व सङ्गात् न तृ ीयः, चेतनत्वाचेतनत भ्यां अ निरू णात् । अचेतनत्वे चेतन - भावत्वे[14] योगात्; चेतनत्वेऽपि अत्यन्तभिन्नत्वेन[15] कुतस्तद्ब्र[16]त्वम्? किं च, यदि त दात यविशिष्टो जीवः, तदा तद्विनाशे विनाशमियात् अथ ादात यरहितः, दा ब्र त्रं एव स्यात्, अत्यन्तभेद नङ्गीकार त् । एतेन जीव णोरतिरेक इत्ययम पि पक्षोऽपास :, त दात यातिरेकत्वा-

---

१. C : ा

२. P, C omit उभयोः

३. Ś : विज्ञान

४. Chānd., VII-i-3

५. Mund., III-ii-9

६. P : हि ा त्

७. C omits इति

८. P : ादात्म्यनि र ाभा :
C : दात्म्ये

९. C : ाध्यते

१०. C : ा स्य

११. Ś omits तादात्म्य

१२. All Mss. read अभेद, but भेद seems preferable.

१३. C : ाद्यः

१४. P : भावत ा

१५. P : भि त्वे

१६. P : स ा त्वम्

दिनोः मतवैषम्याभावात्[1]। या तु ब्र भावश्रुतिरुदाहृता, सा नित्यसिद्ध-स्यैव भ व याभिव्यक्तिमात्राभिप्रायेणाप्युपपद्यते। न च ज्ञान त्र-साध्यस्य नित्यत्वं संभवति, स्मृतिहेतुसंस्कारस्य नित्यत्वादर्शनात्। तस्यापि क्रियाजन्यत्वे चक्रभ्रमणादिसंस्कारवत् स्मृतिहेतुत्वं न स्य त्; क्रिय जन्यत्वेऽपि भावनाख्यसंस्कारस्य स्मृतिहेतुत्वमिति चेत्, ए पि क्रियाजन्यत्वं ज्ञान न्वयव्यतिरेकविरुद्धम्। विमतः संस्कारः क्रिय जन्यः, ब्रह्म नेतरजन्यत्वात्, घटादिवत्; इति चेत्, न; क्रियाया नै ा-न्त्यात्। य हि न क्रियया जन्यते, तु ब्रह्मानेतरैः ार ः। तदेवमुत्पत्तिपक्षे मोक्षस्य घटादिवदनित्यत्वं अनिवार्यम्।

XVIII (d). एवं विकृतिपक्षेऽपि। न हि वि ार्य दध्य दि चि त्यं म्।

XVIII (e). आ पक्षेऽपि यदि प्रत्यगात्मनः स्वरूपभूतं, तद ि यापूर्वकप्राप्तिर्न घटते। आत्मव्यतिरेकेऽपि णः र्व-ग त्वे प्रा नित्यसिद्धा। अथ परिच्छिन्नं प द्बहिर्देशावस्थितं , तन्न; म नाभावात्। शास्त्रं तु सर्वगत्वमेव दर्शया, 'सर्वव्यापी सर्व-भू न्तरात्मा[11]' इति। विकारसंस्पर्शपरिहारायैव[12] कल्प्यत इति चेत्, न; विकारान्तर्वर्तित्वेऽप्यसङ्गस्वभावतया तत्संस्पर्शाभावात्; अन्यथा मध्य परिम णत्वेन सावयवत्वप्रसङ्गात्। ननु[13] 'ब्रह्मविदाप्नोति परम्'[14] इत्यादि ाप्तिश्रुतिबलात् ब्रह्मणो दूरदेशवर्तित्वम्; ति चेत्, ऽ ौ ा ः? न तावद्ब्रह्मभावः, दूषितत्वात्। नापि जीवब्र भ्यामारभ्य ण द्रव्यान्तरम्, मोक्षस्य विनाशित्व सङ्गात्। मो स्य नित्यत्वाय[15] :

१. P : दात्म्यातिरे वादिनोः निर्वि-षस्याभा ात्
२. P, Ś :
३. P : भवत्
४. P omits आख्य
५. P : हि म्
६. P, Ś omit आदि
७. Ś : क्रि ाया
८. P omit इ म्
९. C : पूर्विका
१०. P : च्छि म्
११. Śvet., VI-11
१२. Ś : ैव
१३ ननु is found only in P
१४. Taitt., II-i-1
१५. T, V : नित्यत ात्

सर्वगतत ङ्गी रे सावयवत्वायोगात् द्रव्यान्तरारंभकत्वमेव न स्य त् । जीव णोः स बन्धः प्राप्तिरिति चेत् , मैवम् । न तावत् तादात यम् , अणुमह ोर्विरुद्धयोस्तदयोगात् । नापि समवायादिः, भिन्नद्रव्ययोः संयोग तिरिक्तस बन्धाभावात् ; संयोगस्य च विप्रयोगावस नतय पुनरावृत्ति ेः । श स्त्रबलादपुनरावृत्तिः इति चेत् , तर्हि 'स स्वराट् भवति '[2] इति प्राप्त्यनन्तरं स्वराड्भाव । प्तिश्रवणादनेकेश्वराः प्रसज्येरन् । स्मात् ह्मप्रा प्तिश्रुतिरविद्यानिवृत्तौ जीवस्य स्वरूपभूतब्र । भिव्यक्तिविषय ।

XVIII (f). कथं तर्हि 'तयोर्ध्वमायन्नमृतत्वमेति '[3] इति मूर्धन्यया न डया गमनं[4] मोक्षाय श्रूयते ? इति चेत् , मैवम् । नात्रामृतत्वं न म[5] मोक्षः, किं तु उत्तमलोके चिरकालावस्थानम् , 'आभूतसंप्लवं कालममृतत्वं हि भाष्यते ' इति स्मृतेः;[7] अन्यथा मूर्धन्यन डर्या निर्गच्छ ां तीकोपासकानामपि मोक्षप्रसङ्गात् । न चैतदिष्टम् , तेषां आ विद्युल्लो मेव गमनं इत्येकस्मिन्नधिकरणे निर्णीतत्वात् । अथापि 'स एतान्[9] ह्म गमयति ' इति श्रुत्य कश्चिदमानवः पुरुषः संमुखमागत्य ह्मोपासक न् गृहीत्वा विद्युल्लो ादुपरितनान् वरुणेन्द्रप्रज पतिलो ानतिक्रम्य ब्र प्रापयति इत्येवं गमनमेव मोक्षाय प्रतीयते । इति चेत् न; तस्य गमनस्य ार्यब्रह्मविषयत्वात् । न च बृहत्यर्थानुगमात् परमेव ह्मात्र ग्राह्यमिति शङ्कनीयम् ; शब्दस्य कार्य ह्मणि रूढत्वात् । रूढिश्च योगवृत्तेर्बलीयसी, शीघ्र तिप त्तिहेतुत्वात् । पर यपि रूढिरस्तीति चेत् , तथापि श्रुत्यन्तरे समानप्रकरणे 'ब्र लोकान् गमयति '[10]

---

१. C omits
२. Chānd., VII-xxv-2
३. Chānd , VIII-vi-6
४. P : उपा नं
५. ब्र is found in P, Ś, C.
६. C omits नाम
७. C : ुतेः
८. C : मूर्धन्यया नाडया
९. P : एतान्
Ś : एनान्
The reference is to Chānd., IV- v-6
१०. Bṛh., VI-ii-15

इति भोगभूमिविशेषवाचिलोकशब्दश्रवणात्, अन्यास्वपि शाखासु तटाकाश्वत्थराजगृहद्वारपालवेश्मसभापर्यङ्कादीनां भोग्यवस्तूनां प्रतीयमानत्वात्, कार्यब्रह्मैवेति निर्धार्यते। किं च अर्चिरादिमार्गेण गच्छतां निर्गुणब्रह्मप्राप्तिश्चेत्, तर्हि पञ्चाग्निविद्यावतां गृहस्थानामपि सा स्यात्। न च 'स एतान्[1] ब्रह्म गमयति' इत्येतच्छब्दः पञ्चाग्निविद्व्यतिरिक्तान्[2] परामृशतीति युक्तं वक्तुम्; पञ्चाग्निविदामेव प्राधान्येन प्रकृतत्वात् तेषामनिर्दिष्टफलत्वप्रसङ्गात्। किं च ब्रह्मोपासनानां सर्वेषामपि यद्येकरूपं फलं तदा गुणोपचयापचयाभ्यां उपासनोपचयापचयौ व्यर्थौ स्याताम्। तथा च 'कर्मभूयस्त्वात् फलभूयस्त्वम्' इति न्यायविरोधः। अथोपचयवत्फलं तर्हि न विकारासंस्पर्शिब्रह्मप्राप्तिः, तत्र तदभावात्। किं च वैश्वानरोपासनफलं त्रैलोक्यशरीरापत्तिः यदीष्यते तदा विकारासंसृष्टे[3] ब्रह्मणि कथं तदुपपद्येत? अथ नेष्यते, तदा 'तं यथा यथोपासते तदेव भवति' इति श्रुतिविरोधः स्यात्। किं च पित्रादिसङ्कल्पैः विकारसंसृष्टे ब्रह्मण्युपभोगो न स्याच्चेत् पित्रादिसङ्कल्पश्रुतिविरोधः; स्याच्चेत् विकारावर्ति ब्रह्म पित्रादियुक्तं स्यात्। किं च विकारावर्ति ब्रह्म प्राप्तोऽपि ब्रह्मैवेति 'मनसैतान् कामान् पश्यन् रमते' 'तेन पितृलोकेन संपन्नो महीयते'[5] इत्यादिश्रुतौ ब्रह्मणैव भोगः साधनैः दर्शितः स्यात्; तथा[6] चाप्तकामता विरुध्येत। स्वार्थप्रवृत्ता च सृष्टिः स्यात्। अथोच्येत न पित्रादिसङ्कल्पैः ब्रह्मणि भोगोऽभिधीयते, किं तु ब्रह्मानन्दे निखिलविषयानन्दान्तर्भावात् ऐश्वर्यविशेष उपचर्यत इति; तन्न, बह्वीनां फलश्रुतीनां उपचारकल्पनायोगात्; तन्निर्णायकचतुर्थाध्यायचतुर्थपादवैफल्यप्रसङ्गाच्च। किं च विकारावर्ति ब्रह्मप्राप्तस्य [लिङ्गशरीरमस्ति चेत्, कल्पप्रलयश्रुतिर्बाध्येत[9]; नास्ति चेत्, 'मनसैतान्' इति श्रुतिर्बाध्येत।

१. Ś, C : एतान्
२. C : विद्वतिरिक्तान्
३. Ś : संसृष्टे
४. T, P : उपचयः; others read उपचयेन
५. Chand., VIII-ii-1
६. P adds च
७. Ś : ततश्च
८. फल is found only in Ś.
९. P omits the words within brackets
१०. C : विरुध्येत

विद्ययैव नि त्तिः स्यात् न तु क्रियया ।] ननु श ीयैः स्नान चमनादिकर्मभिरात्मनो गुणाधानलक्षणः संस्कारः श्रूयते । इति चेत्, न[1]; अन्तः रणविशिष्टस्यैवात्मनः तच्छ्रवणात् । न हि निरुप धिकस्य त्मनो ध धिर्माननुतिष्ठतः[2] तत्फलं संभवति । तस्मान्न संस्का रप्यात नि संभवति । ततश्चोत्पत्त्यादिचतुर्विधफलस्य मोक्षे दुःसंपादत्वात् तदतिरेकेणान्यस्य क्रियाफलस्याभ वाच्च विज्ञानस्यैव मोक्षो गोचरः, न क्रि यायाः ।

XIX. ननु ानमपि ध्यानवत् मानसक्रिया; इति चेत्, न; फलतः कारणतश्च ज्ञानक्रिययोः वैलक्षण्यात् । वस्तुस्फुरणं हि ‸ -फलम्; तच्चात्मस्वरूपत्वादजन्यम् । तज्जन तिभासस्तु द भिव्यञ्जकान्तःकरणवृत्तिजन्मोपाधिकः । न चैवं ध्यानक्रि ाफलमजन्यम्, गरुडदेवतादिध्यानात् विषनिर्हरणवश्य षणादिफलस्य पूर्वं विद्यमानस्यैव जन्मदर्शनात् । कारणं च ध्यानक्रियायाः चोदनाजन्य रुषेच्छापूर्वकः प्रयत्नः, न विषयसद्भावः; असत्यपि विषये विधितो योषिदग्न्यादिध्य नदर्शनात् । ज्ञानं तु माणप्रमेयजन्यं न रु च्छ वर्तते, अनिच्छतोऽपि[3] दुर्गन्धादिज्ञानदर्शनात् । यद्यप्यनुमानशब्दादिषु नस्य न[4] प्रमेयजन्यत्वनियमः अतीतानागतवस्तुज्ञानेषु तदसंभवात्, थापि लिङ्गशब्दादितन्त्रमेव तत्रापि ज्ञानम्, न पुरुषेच्छातन्‍ ति क्रि यातो विलक्षणमेव ।

XX. ननु संयोगविभागपरम्पराव्यतिरेकेण क्रि यै नास्ति, यतो वैलक्षण्यं ज्ञानस्योपपाद्येत[5] । सर्वत्र संयोगविभागपरंपरावति हि श्येनादौ चलतीति प्रत्ययो जायते । न चैवं स्थाणावपि श्येनसंयोगविभागवति चलनप्रत्ययः प्रसज्येत इति वाच्यम्; आ ाश देशविशेषसंयोगविभागं प्रत्येव[6] तदङ्गीकारात्; न हि स्थाणुराक देशवि ः

1. न is found only in Ś and C
2. P : ध धिर्मं च मुष्ठितः लं न भवति
Ś, C : ध धिर्मावनुति :
3. P omits पि
4. Ś omits न
5. P : द्येत
6. P, Ś : वि ा त्येव

संयुज्यते विभज्यते वा[1]। तस्मात् अतिप्रसङ्गाभावात् नास्ति संयोग-विभागप्रचयातिरेकिणी क्रिया।

XXI (a). ति चेत्, मैवम्; बहुलान्धकारावृते नभस्य-तीयमाने तत्प्रदेशविशेषसंयोगविभागानामप्यप्रतीतौ ख ोते चलतीति प्रत्ययसद्भावात्। तस्म त्संयोगाद्यतिरिक्ता[2] क्रिया प्रत्यक्षसिद्धा।

XXI (b). प्राभाकरस्तु[3] क्रियाया नित्यानुमेयतां मन्वान इत्थं प्रयुङ्क्ते। विमतौ आद्यसंयोगविभागौ स्वाश्रयगतेनाव्यवहितपूर्वक्षणो-त्प तिशयेन जन्यौ, व्यवस्थितद्रव्ये कादाचित्कत्वात्, संयोगविभाग-जन्य ाविवत् इति; तत्र योऽसावतिशयः स एव क्रिया भविष्यति। ईश्वरेच्छया सिद्धसाधनता मा भूत् इत्युत्पन्नेत्युक्तम्। आत्ममनःसंयो-गजन्यादृष्टव्यवच्छेदाय अव्यवहितपूर्वक्षणेति। द्रव्येण सहोत्पन्ने शौक्ल्यादावनैकान्तिकत्वव्यवच्छेदाय व्यवस्थिते द्रव्ये इति।

XXI (c). मैवम्। किमत्र संयोगिनोः द्वयोरप्य तिशयः साध्यते, किं वा अन्यतरस्मिन्नेव, उताविशेषितमतिशयमात्रम्? नाद्यः, श्येनस्थाणुसंयोगादावभावात्, तस्यान्यतर मजन्यत्वात्। न द्वितीयः, उभयकर्मजन्ये मल्लमेषसंयोगादौ साध्यासंभवात्। तृतीयेऽपि किमसौ क्रिय ख्योऽतिशयः स्थिरादेव द्रव्यादुत्पद्यते, उतातिशयान्तरात्? अ द्ये संयोगविभागयोरेव तस्मात् द्रव्यादुत्पत्तिरस्तु, किमनेनातिशयेन? द्विती-येऽनवस्थापातः। अथ मतं भूमिपादयोः संयोगः पादाश्रितकर्मणा जायते, तच्च[4] कर्म न कर्मान्तरेण जायते, किं तु प्रयत्नवदात्मपाद-संयोगेन, ततो नानवस्थेति। तर्हि प्रयत्नवदात्मपादसंयोगस्यैव भूपादसंयोगारंभ त्वमि ति वक्तुं शक्यतया न कर्म सिध्येत्। तस्म न्नानुमेया क्रिया, किं तु त्यक्षैव। न च क्ष णिकस्य कर्मणः थमिन्द्रियसंयोगज्ञानं क्षणद्वयावस्थमिति वाच्यम्, शब्दविद्युदा-

---

1. C: वियुज्यते च
2. Ś omits आदि
3. Ś, T: प्रभाकरस्तु
4. Ś: तत्र

दिवदविरोधात् । अतश्च प्रत्यक्षसिद्धं[1] क्रियातो वैलक्षण्यं ज्ञानस्योपपन्नम् ।

XXII (a). नन्वन्तः रणपरिणा रूपत्वात् ान पि क्रियैव । सत्यम् ; तथापि ध्यानवत्पुरु न्त्रत्वाभाव त् वि धियोग्यक्रियातो वैलक्षयमस्त्येव । यथा यो षिति अग्निध्यानं विधिजन्यपुरुषेच्छावशात् कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं न तथा सिद्धेऽ ौ अग्निज्ञानं विधातुं पुरुषेच्छयानुष्ठ तुं[2] वा शक्यम् ; सत्या पीच्छायां नःसहकृतस्य चक्षु : स्पर्शनेन्द्रियस्य वा अग्निसंयोगमन्तरेण तज्ज्ञानानुदयात् ; ति तत्संयोगे विन पीच्छां ज्ञानोदयात् । अन्यथा रणं दूर ास्तम् । न हि पुरोऽवस्थितः अग्निः निपुणतरेणापि स्त भ द्याकारेणावगन्तुं शक्यते । थं तर्हि रज्जौ सर्पज्ञानम् ? ति चेत्, नै[3] ; तस्य नाभासत्वात् । न च सोऽप्याभासः पुरुषतन्त्रः, अनिच्छ : पमा स्यापि जायमानत्व त् ।

XXII (b). ननु लोके ' अग्निमग्निं पश्य ' ति के चिद्विहिते सत्यन्योऽपि स्वेच्छया[4] तदभिमुखो भूत्वा तं पश्यति; असत्यां त्विच्छायां वि खो भूत्वा चक्षुषी नि ील्य वं[5] न यति; तथा श - वशात् आहवनीय द्यग्नीन् करणाद्युपेतानवलोकय ति । अतः थं रुषस्य नविषयकरणाकरण न्यथ रणेषु स्वातन्त्र्याभावः ?

XXII (c). उच्यते । अ भिमुख्यवै ख्ये दर्शनादर्शनयोः सामग्र्यै । तत्र तत्संपादनलक्षण[6]क्रि याय मेव पुरुषस्य स्वातन्त्र्यं, न ज्ञ ाज्ञानयोः । अतः ' पश्य ' इत्युक्ते ' म ग्रीं संपादय ' इत्ययमर्थः संपद्यते । यदि ज्ञानं पुरुषप्रयत्न न्यं स्यात् दा धाराव हिकद्वितीयादिज्ञाना ा त्पत्तिर्न स्यात्, [7]थ ानस्यैव यत्न न्तरीय-

---

१. Ś, T, V : ः सिद्धक्रि ो
२. Ś : नुमातुं
३. Ś in erts न
४. P : स्वेच्छ ावान्
५. Ś adds ं
६. C omits क्षण
७. P : ज्ञानस्यैव

कत्वात्। न हि यत्नजन्य[1]गमनादिक्रियायाः परंपरा सकृत्प्रयत्नमात्रादुत्पद्यमाना दृश्यते। अथ बाणविमोकचक्रभ्रमणादौ प्रथमप्रयत्नादेव क्रियापरंपरा जायत इत्युच्येत, तन्न[2]; तत्रोत्तरोत्तरक्रियाणां वेगाख्यसंस्कारजन्यत्वात्। न च धारावाहिकज्ञानेषु तथा संस्कारोऽस्ति। न च प्रथमज्ञानजन्य[3]संस्कारात् उत्तरोत्तरज्ञानपरंपरा जायतामिति वाच्यम्; तथा सति स्मृतित्वप्रसङ्गात्; स्मृतित्वे च इन्द्रियसंयोगाद्यनपेक्षत्वप्रसङ्गः। तस्मात् द्वितीयतृतीयादिज्ञानानां [4]प्रमाणतन्त्रत्वात् [5]प्रथमज्ञानस्यापि तथात्वे वक्तव्ये प्रयत्नान्वयव्यतिरेकौ माणसामग्रीसंपादनविषयतया उपपद्येते। एवं स्मृतिज्ञानमपि संस्कारोद्बोधाधीनं न पुरुषप्रयत्नाधीनम्; सदृशदर्शनाददृष्टवशाद्वा संस्कारोद्बोधे प्रयत्नमन्तरेणापि अनिष्टविषयस्मृतिदर्शनात्। यदि क्वचित्स्मृतिविशेषे प्रयत्नापेक्षा दृश्येत, तदापि प्रयत्नेन चिन्तापरपर्यायं चित्तैकाग्र्यमेव जायते न तु स्मृतिः; तेन चैकाग्र्येण संस्कार उद्बोध्यते। तदुक्तम् 'सदृशदृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति।

XXII. (d). यत्तु शास्त्रवशात् आहवनीयादीनां शरीरावलोकनं तत्रास्ति काचिदाहवनीयदेवतायाः मूर्तिरिति, योऽयं परोक्षः प्रत्ययो मूर्तिविशेषविषयः, स न पुरुषतन्त्रः; विनैव प्रयत्नं मूर्तिविशेषवाचिशब्दैरेव जायमानत्वात्। यच्च पुरोवर्त्यङ्गाराणां तन्मूर्तिविशेषाकारेण भावनम्, तन्न ज्ञानम्, अयथावस्तुत्वात्। न च 'अयथावस्तुत्वे कथं शास्त्रीयत्वम्?' इति वाच्यम्; न हि शास्त्रमङ्गाराणां[6] हस्तपादादीनवयवान् प्रतिपादयति, तथा सति प्रत्यक्षविरोधप्रसङ्गात्। किं तर्हि? अयथावस्तुगोचरेणापि भावनेन फलविशेषः साध्यः इति प्रतिपादयति। न चासौ साध्यसाधनभावो मिथ्या। ततो भावनस्यायथावस्तुत्वेऽपि न

---

१. Ś : जन्यायाः गमनादि

२. Ś : ततः न

३. Ś : न्यैं

४. C : प्रमाणपरतन्त्रत्वात्

५. P stops with this.

६. Ś : अङ्गारराणां

शास्त्रस्य काचिद्धानिः । भावनस्य च पुरुषतन्त्रत्वमस्माभिरभ्युपेयत एव, तस्यै ध्यानक्रियारूपत्वात् ।

XXII (e). ननु ध्यानमप्यपुरुषतन्त्रमेव, धारावाहिकस्मृतिज्ञानरूपत्वात्; इति चेत्, न; अननुभूते स्मृत्ययोगात् । न हि योषिदादेरग्न्यादिरूपत्वं किञ्चिदनुभूतम् । न च 'योषा वाव गोतमाग्निः' इत्यागमात्तदनुभवः ति वाच्यम् । किमस्मादागमात् प्रमितिर्जायते, किं वा विपर्ययानुभवः? आद्ये योषिदाग्न्यप्रमितिपरेणानेन वाक्येन ध्यानविधिर्न सिध्येत् । अथ विधिपरमेतद्वाक्यम्, तदा न योषिदग्नित्वं प्रमीयेत । उभयपरत्वे वाक्यभेदो विरुद्धत्रिकद्वयापत्तिश्च । योषिदग्नित्वप्रमितौ प्रत्यक्षविरोधश्च । न द्वितीयः, दोषरहितस्यागमवाक्यस्य विपर्यय नुभवहेतुत्वायोगात् । तस्मान्नैतेन वा येन प्रसिद्धयोः योषिदग्न्योः तादात यमनुभवितुं शक्यम् । किं तर्हि? यथा दर्शपूर्णमासादिरूपायाः शारीरक्रियायाः स्वर्गसाधनत्वं तद्वाक्यात्प्रमीयते, तथा अस्मादपि वाक्यात् कस्याश्चिन्मानसक्रियायाः फलविशेषसाधनत्वं प्रमीयते । तर्हि योषिदग्निपदद्वयं व्यर्थं स्यात्; इति चेत्, न; क्रियाभाजो मनस आकारविशेषसमर्पकत्वात् । यथा 'गोकर्णाकारेण पाणिना आचामेत्' इत्यत्र गोशब्दः कर्णशब्दो वा आचमनाङ्गस्य पाणेः स्वार्थसदृशाकारं केवलं समर्पयतः, न तु प्रसिद्धस्वार्थं प्रतिपादयतः, तथा योषिदग्निशब्दावपि प्रसिद्धस्वार्थमस्पृशन्तावेव तत्सदृशाकारं मनसो ध्यानाङ्गस्य किं न समर्पयेताम्? न च योषिदग्नितादात यस्य अत्यन्तमप्रसिद्धत्वात् तत्सदृशाकारसमर्पणमयुक्तमिति वाच्यम् । किं शब्दस्यात्यन्ताविद्यमाना ारसमर्पकत्वाभावः, किं वा मनसः तदाकारभाक्त्वाभावः? उभयमपि वक्तुमशक्यम् । यतो नरस्य विषाणस्य चात्यन्ताविद्यमानमेव सम्बन्धा ारं नरविषाणशब्दः समर्पयन्नुपलभ्यते; मनश्च तमा ारं भजते । ततश्च

१. Ś : तस्याध्याने
२. T, V : अनुभवतन्त्रमेव
३. Ś : चित्
४. All except Ś, C read ननु
५. Chānd., V-viii-1
६. T, V : प्र ीयते
७. Ś : रीर
८. T, V : सिद्धार्थं

तिस पिंत रविंशि या मानसक्रिय याः प्रवाहो ध्यानम्, न तु स्र ति वाहः ।

XXII (f). नन्व विद्यमानविषये ध्यानस्मृति वाहयोः अ ा-ङ्कर्येऽपि वि नविषये चतुर्भुजधारि वि वादौ शास्त्रेणानुभूते विधीयम नं ध्यानं न स्मृतिप्रव ह द्विशि यते; ति चेत् , न; परोक्षत्वेनानुभूताय मूर्तेः अपरोक्षस ल तिमाद् वनुसन्धानस्य विहितस्य ागनुभूतताभावेन स्मृतित्वायोगात् । अ रो तया अनुभूतेष्व पि वस्तुषु स्मृ तिः ध्याना द्वि शि-यते। यथा । बाल्ये पठित्वा वेदं चिरकालव्यवधाने स ति पुनः पर्यालो-चयन् एकै स्मिन् वाक्ये चिरं चित्तै । यं कृत्वा तत्तद्वाक्यं यथापठितमेवा-वगच्छ ति सै स्मृतिः । न चात्र पुरुषः स्वतन्त्रः; यत्नेन चित्तै ध्ये पादितेऽपि स्मिंश्चिद्वा यविशेषे स्मृत्यनुदयात् । न च स्मर्यमाण पि व यं[2] अन्यथा स्मर्तुं श यम् , अवेदवा यत्वप्रसङ्गात् । नापि स्वेच्छा-वशादस्मर्तुं श यम् ; अ निच्छ तोऽशौचावसरेऽपि कदाचित् वेदवा य-स्मृतेरनिवार्यत्व त् । अतः तुम तुमन्यथा व तुमश य यथानुभू वस्त्वविलङ्घयन्ती[3] तत्संस्र रोद्बोधमात्र धीना स्मृतिरित्युच्यते । ध्य नं तु अनुभूते अननुभूते वा वस्र नि विद्यम ानां अविद्यमान नां[4] वा धर्मा ां निरङ्कुशं ल्पनं यल्लोके म नोराज्यमिति प्रसिद्धम् । न च तत्र पुरु : पर न्त्रः, स्वेच्छामनोभ्यां विना स धनान्त रानपेक्षणात् ।

XXII (g). तर्ह्ययथाशा मपि देवतादिध्यानं स्वेच्छानु रेण सज्येत ; ि चेत् , सत्यम् ; तत्केन निवार्येत[5] ? न हि मनोराज्यं राजादिन शास्त्रेण व निवारयितुं श यते[6] । परं तु शास्त्रोक्तध्याने ीयः लविशेषो भव ति, नेतरत्र; अदृ साध्यस धन न्धे स्य नियमकत्वात् । न च 'शास्त्रमपि अयथ वस्तुगोचरध्यानेन थं फलविशेषं[7] तिपादयति ?' ति व च्यम् । न हि वयं श पर्य-

१. Ś : भू त्वा
२. Ś : वे , ा
३. Ś omits वि
४. Ś omits वि ा ां
५. T, V : नि ार्येते
६. C, Ś : श यम्
७. Ś : विशे

नुयोक्तुं प्रभवामः, शास्त्रस्याचिन्त्यमहि त्वात् । अन्यथा ाहुतिप्रक्षेपः वा स्वर्गः? कामत्रोपपत्तिमद्राक्षीः? अथापि श्रद्धाजाड्येन योषिदग्न्यात्मिकां कांचिद्देवतां परिकल्प्य तद्ध्यानस्य वस्तुविषयत्वं ब्रूषे, तर्हि 'आदित्यो यूपः', 'यजमानः स्तरः' इत्यादावपि तत्तद्रूपां देवतां प्रकल्प्य स्वार्थे प्रामाण्यं प्रसज्येत । प्रत्यक्षविरोधस्तु भवतोऽपि समानः[1] । न चैवं इन्द्रादिदेवतानामप्यपलापः; तत् तिपादकमन्त्रार्थवादानां मानान्तरविरोधाभावात् । ननु सर्वेष्वपि वस्तुषु अभिमानिन्यो देवताः सन्ति 'मृदब्रवीत्, आपोऽब्रुवन्' इत्यादौ सूत्रकारेण तदङ्गी ारात्; इति चेत्, तर्ह्यत्रापि अग्न्यभिमानिनी काचिद्देवता योषिदभिमानिनी काचिदपरा इति देवताद्वयमस्तु । न च ते देवते अत्र ध्येये, ि तु योषिदग्नितादात यम् । न च तादात्म्य यावास्तवस्याभिमानिनी देवता संभवति; नरविषाणादौ अति सङ्गात् । न च योषिदग्निनामि । ाश्चिद्देवता स्यादिति मन्तव्यम्; नाममात्रत्वे योषिदवयवेषु यथायोगं अग्न्यवयवसंपादनवैफल्यात् । संपाद्यते हि तथा श्रुतौ 'योषा वा व गोतमाग्निः तस्या उपस्थ एव समिल्लोमानि धूमो योनिरर्चिः' इत्यादिना । अथैतद्ध्यानफलप्रदाता परमेश्वर एव[2] तद्देवता भविष्यति; तथापि न सात्र ध्येयः । न हि सर्वान्तर्यामिणो जगदीश्वरस्य अतिजुगुप्सितयोषिदवयवरूपेण ध्यानमुचितम् । परमेश्वरस्य सर्वात्मकत्वादविरोधः इति चेत्, तर्हि 'तं यथा यथोपासते तदेव भवति' इत्यनया न्यायानुगृहीतया[3] श्रुत्या उपासकस्याकारप्राप्तेः फलत्वावगमात् उपासकस्यात्र जुगुप्सितयोषिदवयवत्वप्राप्तौ अग्निरूपत्व ाप्तौ वा सत्यां अनर्थफलैव प ाग्निविद्या स्यात् । अथ विशेषशास्त्रबलादत्र ब्र लोक ाप्तिः फलं, तर्हि तद्बलादेव विनाऽप्युपास्यदेवतां अवस्तुविषयेण[4] ध्यानेन फलसिद्धौ शास्त्रभक्तंमन्येन त्वया ध्यानस्य वस्तुविषयतायां नात्यन्तमभिनिवे व्यम् ।

---

१. Ś : तूभयत्रापि समानः
२. Ś reads ए तद्देवता; all others read एतद्देवता
३. Ś : अनुगृहीतश्रुत्या
४. This is the reading as found in Ś. The printed edition reads दे ता स्तुवि - येण

XXII (h). अथोच्येत

उपपातकेषु[1] सर्वेषु पातकेषु महत्सु च ।
प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत् ॥

इति स्मृतौ यथावस्तुविषयध्यानमवग यते इति । तत्र किं ध्यातृदृष्ट्या वस्तुवि यत्वं शास्त्रदृष्ट्या वा ? आद्येऽपि यदि ध्याता ब्रह्मात्मत्वं जानाति तदा नासौ प्रायश्चित्तेऽधिकरोति, पातकादिस बन्धाभावात् । अथ न जानाति तदा असावात्मानमन्तःकरणविशिष्टतया ब्रह्मस्वरूपं च परोक्षतया अवगच्छन् 'अहं ब्रह्मास्मि' ति ध्यानं कथं वस्तुविषयं मन्येत ? न द्वितीयः; ध्याता ह्यन्तःकरणविशिष्टस्य त्मनो ब्रह्मत्वं ध्यायति[2] । यद्यपि तत्रान्तःकरणांशं विहाय चिदंशस्य ब्रह्मत्वं शास्त्रसंवादि तथापि न तावता ध्यानस्य वस्तुविषयत्वम् । अन्यथा अनेन न्यायेन अंशतः संवादिनां शुक्तिरजतादिज्ञानानां यादृच्छिकसंवादिलिङ्गाभ सादिजन्यज्ञानानां च वस्तुविषयत्वेन प्रामाण्यप्रसङ्गात् । ननु विदितब्रह्मात्मतत्त्वानामपि 'ब्र ध्यानं करिष्यामः' इति व्यवहारदर्शनात् ध्यानस्य वस्तुविषयत्वम्; इति चेत्, न[3]; प्रबलपूर्ववासनया प्रच्युते ब्र ात्मत्वानुभवे तस्यामेवावस्थायां एवं व्यवहारात् । न हि ब्रह्मात्मत्वमनुभवन्त एवं व्यवहर्तुमर्हन्ति । न हि लोके देवदत्तः स्वस्य मनुष्यत्वमनुभवन् 'मनुष्यत्वं ध्यायामि, ध्यास्यामि' इति वा व्यवहरति । ननु 'ध्यायति प्रोषितनाथा पतिम्' इत्यत्र वस्तुविषयेऽपि ध्यानव्यवहारोऽस्ति; इति चेत्, न; तत्र ध्यानशब्दस्य पूर्वानुभूतपतिविषयस्मरणलक्षकत्वात्[4] । यद्वा विरहातुरा मनोराज्यं करोति इति स्यमेव ध्यानमस्तु; तस्मादवस्तुविषये ध्याने पुरुषस्य स्वच्छन्दप्रवृत्तौ कः प्रतिबन्धः ?

XXII (i). ननु सकृत्प्रयत्नमात्रेण घटिकामात्रं ध्यानानु त्तिरुपलभ्यते; तत्र प्राथमिकमनोव्यापारं परित्यज्य इतरेषां मनोव्यापारा ां

---

१. Ś : उपपादकेषु; the printed text reads उपपापेषु

२. Ś adds : न त् ध्येयं शास्त्र- द या वस्तुतः

३. C omits न

४. C : लक्षणत्वात्

प्रयत्ननिरपेक्षत्वात् धारावाहिकज्ञानन्यायेन तन्निरपेक्षत्वे प्राथमिकस्यापि प्राप्ते सति सामग्रीसंपादन एव प्रयत्न उपक्षीयताम्; तथा च ज्ञानाद् ध्यानस्य पुरुषतन्त्रत्वकृतं वैष म्यं न भविष्यति।

XXII (j). इति चेत्[1], किमिदानीमेवारभ्याभ्यस्यतां अपि सकृत्प्रयत्नाद् ध्यानानुवृत्तिः, किं वा पट्वभ्यासवतामेव? नाद्यः, अनुभवविरोधात्। न द्वितीयः; प्रतिमनोव्यापारं विद्यमानानामेव पृथक्प्रयत्नानां अभ्यासपाटवाभिभूततया अनभिमन्यमानत्वात्। यथा बालस्यैकहायनस्य प्राथमिकगमनाभ्यासावसरे प्रतिपादविन्यासं पृथक् प्रयत्नोऽभिव्यज्यते, न तथा पुनः शीघ्रगमने तदभिव्यक्तिरस्ति। न चात्र पुनः पृथक्प्रयत्नाभावः; विषमस्थले व्यवधानपतनादिना[2] तदभिव्यक्तेः। एवं ध्यानाभ्यासपाटवोपेतस्यापि प्राथमिकध्यानानुसारेण प्रयत्नविशेषा अवगन्तव्याः।

XXII (k). अथ वा यथा वक्रबाणे वेगरहितेऽपि ऋजूकृते तस्मिन्नेव वेगः तथा अभ्यासात् प्राग्वेगशून्येऽपि[3] ध्यानाभ्यासादृजूकृते मनसि वेगाख्यः संस्कारः[4] कल्प्यताम्। अस्मिन्नपि पक्षे ध्यानस्य प्रयत्नतन्त्रत्वं नापैति; बाण इव गमनस्याप्याद्यक्रियायाः प्रयत्ननान्तरीयकत्वात्। न चैवं धारावाहिकज्ञानेषु पृथक्प्रयत्नाः कल्पयितुं शक्यन्ते। यथा अनभ्यस्तविषये ध्याने प्राथमिके द्वयोर्द्वयोरावृत्त्योर्मध्ये किञ्चित्किञ्चिद्व्यवधानं पृथक्प्रयत्नगमकमस्ति न तथा प्राथमिकेऽपि धारावाहिकज्ञाने तदस्ति; प्रमाणप्रमेयसम्बन्धजन्ये तस्मिन् बालवृद्धयोर्विशेषादर्शनात्। अथ द्वितीयतृतीयादिज्ञानाकारपरिणामपरम्परानिर्वाहाय मनसि वेगः कथञ्चित् कल्प्येत, तथाप्याद्यज्ञानस्य[5] प्रयत्नानन्तरीयकत्वाभावात्[6] न ज्ञानं पुरुषतन्त्रम्। न हि ज्ञानं प्रयत्नानन्तरमेव जायते; किं तु तेन

---

१. C omits चेत्
२. Ś adds व्यवधानपतनादिना
३. Ś: प्रागेव शून्येऽपि
४. Ś adds स
५. This is the reading in Ś and T. V reads थाप्यज्ञानस्य.
६. T, V: प्रयत्ननान्तरीय त्वाभा ात्

यत्नेन प्रमाण दिसामग्र्यां स पादितायां पश्च दुत्पद्यते। तथा अज्ञान[1]-निवृत्तिरपि न प्रयत्न नन्तरभ विनी। किं र्हि? यत्नेन विरे धिसामग्र्यां स पादित यां पश्चान्निवर्तते। एवं च सामग्र्याः पुरुषतन्त्रत्वे[2] सति ज्ञानमेव पुरुषेण कर्तुम तुं वा शक्यमिति वादिनां विभ्रमः। अन्यथा रणं तु ज्ञानस्यात्यन्तमनाशङ्कनीयमित्युक्तं पुरस्त त्। न च ध्य न पि प्रयत्नसंप दि सा गीतन्त्रं न यत्न न्त्रमिति वक्तुं श यम्, यत्नातिरिक्तस मग्र्यभावात्। अ ो ध्यानस्यान्यव्यवधानमन्तरेण साक्षादेव करणाकरणे सुशके। अन्यथाकरणं तु निरङ्कुशं संभवति।

XXII (I) तदेवमजन्यफलं वस्तुविषयं माणजन्यं ज्ञानम्, जन्यफलं वस्तुनिरपेक्षं पुरुषेच्छ ात्रजन्यं ध्य न ति ज्ञानध्य नयोम न-सत्वेन समयोरपि फलतो विषयतः ारणतश्च महद्वैलक्ष यं सिद्धम्। एवं च सति अपुरुषतन्त्रतया अनु ातु श यं ब्र ानं विधियोग्यं न भवतीति 'आत्मा वा अरे द्र व्यः'[3] इति तव्यप्रत्ययोऽर्हार्थोऽवगन्तव्यः।

XXIII. कथं तर्हि 'आत्मन्येवात्मानं पश्येत्'[4] इति दर्शनविधिः? ति चेत्, दर्शनस धनभूतान्तर्मुखत्वादिविधित्वेन व्याख्येयमिति ्मः। व्याख्यातं चास ाभिर्विचारविधिपरत्वेन प्रथमसूत्रतृतीयवर्णके। तदेवं मोक्षपर्यालोचनया उत्पत्त्याद्ययोग्यत्व पर्यालोचनया ज्ञानपर्यालोचनया च विध्यसंभवात् अहेयानुपादेयात्मतत्त्वे वेदान्ताः पर्यवस्यन्ति इत्यभ्युपेयम्।

XXIV. नन्वहंप्रत्ययावसेयात्मनः कर्माङ्गत्वात् तत्र पर्यवसितानां वेदान्त नामपि र्मविधिवाक्यैः ए वा यता स्यात्; इति चेत्, न; अनन्यवेद्ये क्रियाकार संसर्गशून्य एवात नि वेदान् नां पर्यवसान त्। [6]'अग्निहोत्रफला वेदाः शील त्तफलं श्रुतम्' इति स्मृति ारैः सर्वो वेदो

१. T, V : त्ने नि त्तिरपि
२. All e cept Ś read प्रयत्न-न्त्रत्वे
३. Bṛh., II-iv-5
४. Bṛh., IV-iv-23
५. All e cept C read व्याख्येयं
६. C inserts , perhaps for अथ

धर्मे विनियुक्तः; इति चेत्, न; 'तं त्वौपनिषदं पुरुषं पृच्छामि'[1] 'सर्वे वेदा यत्पदमामनन्ति'[2] 'वेदैश्च सर्वैरहमेव वेद्यः'[3] इति श्रुतिस्मृतिव ात् पूर्व-स्मृत्यर्थस्य[4] निर्णेतव्यत्व त्।

XXV. ननु 'आ नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'[5] ति वदन् जैमिनिरित्थं मन्यते। उत्तम द्धोक्तशब्दश्रवणानन्तरं मध्यम-वृद्धस्य त्तिं दृष्ट्वा तया तस्य कार्य ानमनुम य कार्य न्वि एव र्थे शब्दसामर्थ्यं व्युत्पित्सुर्जानाति। था च सिद्धवस्तुन्यगृहीतस -र्थ्यस्य शब्दस्य तद्बोधकत्वासंभवात् वेदान्तानामप्यद्वैतात्मतत्त्वबोधकत्वं नास्तीति।

XXVI (a). मैवम्। विं भाट्टमतमवलम्ब्यैव च्यते? किं वा भा रमतमवलम्ब्य? न द्यः; अभिहितान्वयवादी हि भा ः। चैवं व्युत्पत्ति क्रियां रचयति। उत्त द्धेन वाक्ये यु ते श्रो मध्यम-वृद्धस्य वृत्त्य विशि संसर्गज्ञानं शब्द ार्यत्वेना म य शब्दसमुदाय-स्य र्थस दाये स र्थ्यं तिप ते। तत्र 'गामानय' 'गां धान' इत्यादि योगेषु अ वापोद्ध राभ्यां आनय तत्संसर्गव्यभिचारेऽपि गो ा-त्रस्यान्वयात् बन्धनेऽपि[6] गोशब्दस्य गोम त्रे र्थं तिपद्यते, न त्वानयनतत्संसर्गयोर्व्यभिचरितयोः। एवं सर्वपदानां पदार्थस्वरूपमात्रे स र्थ्यप्रतिपत्तेः 'संसर्गबोधः किंनिबन्धनः?' ति वीक्षायां अनन्यथा-सिद्धान्वयव्यतिरेकाभ्यां शब्दावगतपदार्थनिबन्धन इति कल्प्यते। ततः पदेभ्यः पदार्थाः, पदार्थेभ्यः संसर्गः इत्यभिहितान्वयः इति। एवं च सति एतन्मतानुसारेण शब्दस्य न ार्यान्वितस्वार्थे सामर्थ्यम्, ि स्वार्थमात्रे। ततः सूत्रगतानर्थक्यपदेन अक्रियार्थानां शब्दानां न भि-धेयाभावो वर्णयितुं शक्यः। अथ योजनाभावो वर्ण्ये , ; 'सोऽरो-

---

१. Bṛh., III-ix-26
२. Katha., II-15
३. Gītā, XV-15
४. T : श्र नात्पूर्वं स्मृत्यर्थस्य
५. P M., I-ii-1
६. C : न्धनेनापि गो ा स्यान्व ात्

दीते ' इत्य दिव यानां तथात्वेऽपि निरतिशयानन्दरूप तिपद ां वेदान्तानां नि योजनत्व योगात् ।

XXVI (b). नन्वस्तर्हि द्वितीयः पक्षः; अन्वित भिधान- दिन भाकरेण भा व द्विरलपद र्थव्युत्पत्त्यनङ्गी ारात् । स वं व्युत्पत्ति क्रियां रचयति । 'शुक्लां ग ानय दण्डेन' इति शब्दस्य श्रव- न्तरं श्रोतुर्गवानयने त्ति पलभ्य गवानयन र्यता अनेन श्रोत्रा शब्दात्प्रतिपन्न ति भू ार्थसं र्यें शब्दस दायस्य सामर्थ्यं बालः तिपद्यते । नश्च 'गां बधान', 'अश्वं अ नय' इत्या दिप्रयोगान्त- रेषु गोशब्दस्य न्वये र्यसंसृ गवाकृतेः अन्वयात् तदुद्धारे च [2] र्य- संसृ गव तेरेवोद्ध रात् र्यसंसृ यां गवि पदसामर्थ्यं कल्प्यते; आन- यनतत्संसर्गव्यभिचारेऽपि र्यसंसर्गाव्य भिचारात् । एवं च सति यथ अभिहितान्वयवादे पद नां प्रथम गतसंसर्गबुद्धिहेतुत्वस्य पवादो व य- क्यार्थयोर्मध्ये पद र्थ च क्तिव्यव ानगौरवं चेति दोषद्वयमस्ति, न अन्वि भिधानवादे दस्ति; प्रत्युत पदानामेव संसर्ग तिपादने वमिति ।

XXVI (c). नैतत्सारम् । न हि योगभेदेषु ार्यसंसर्ग एव तेर्नियमेन तीयते,[3] किं गुणद्रव्यक्रि य [4]र्कसंसर्गश्च । तथ हि 'शुक्लां गाम नय' इत्यत्र गुणस्य जातियुक्तेन द्रव्येण स बन्धः, द्रव्यस्य च विभक्त्यर्थेन कारकेण, नश्च विभक्त्यर्थविशि स्य द्रव्यस्य यय, क्रियाय श्च नियोग र्येणेति व्यवहितः र्यस बन्धः । तथ च सति अव्यवहितस बन्धोप दानसिद्धये अन्य न्वि स्वार्थम त्रे शब्द- सामर्थ्य भ्युपेयम्, ल घव त्; अन्यथा अनुवादप्रसङ्गात् । ार्यान्वि त- स्व र्थेषु णान्तरगृहीतेषु शब्दसामर्थ्यं प्रतिपद्य पश्चाद् व क्यप्रम णा- दपि वन्मात्र तिपत्तौ थ नुवादो न भवेत्? न च ार्येणं सर्वपद-

१. TS., I-v-1

२. Ś omits ार्यं सं

३. Ś : मीयते

४. Ś : गुणद्र० क्रि ा र ं गे

५. C ; र्यपदे

र्थान मव्यवहितः स न्बधोऽस्ति येन तत्सं स मर्थ्यं स्यात्। स्ति कार्यस्य सर्वपदार्थैः स बन्धः शेषशेषिलक्षण इति चेत्, त्र र्यस शेषित नाम किं स्वामित, किं वा अवयविता, उत र ध्यता, अथ वा परमसाध्यता? नाद्यः, अचेतनस्य स्व मित्वायोगात्। न द्वितीयः, इतरपदार्थानां र्यं प्रत्यवयवत्वाभावात्। न तृ ीयः, क्रियाया एव सर्वत्र कारकसाध्यत्वात्। न चतुर्थः, स्वर्गादेरेव रम-साध्यत्वात्। अतः सर्वानुगतैक योज लाभ य अन्यान्विते र्थ्यम-भ्युपेयम्। य दि कार्यान्विते सामर्थ्यं स्य त्, दा र्यपदस्य त सिध्येत् कार्यान्तराभावात्। अस्ति धात्वर्थलक्षणं र्यान्तरमिति चेत्, न; धात्वर्थस्य थमतः र्यत्वाभावात्। नियोग र्यस्य ध्यत्व-सिद्ध्यर्थं धात्वर्थे वेषयत्वेनान्विते पश्चात रणभू स्य स्यं धात्वर्थ-स्यानुष्ठेयतया र्यत्वम्, न तु नियोगान्वयकाले। न चै स्मिन् कार्यपदे व्यभिचारभयेन बहूनां पदानां अव्यभिचरित र्यान्वि र्थत्वह-नमयुक्तमिति वाच्यम्; तथ सति अर्थग माणान्तर ह्यत स्य व्य-व्यभिचारितयां शब्दसामर्थ्यविषयत्व सङ्गात्। अथोच्येत अ न्य -सिद्धान्वयव्यतिरेकबलात् सर्वत्र शब्दव च्यत कल्पनीयम्; न्त-रग्राह्यत्वस्याव्यभिचारित्वं तु योगनिमित्तत अन्यथासिद्धम्; ब्द-योगो हि प्रमाणान्तरगृहीत एवार्थे संभवति, नान्यथ; मान्नोक्त-प्रसङ्गः इति। तर्हि कार्यस्याव्यभिचारित्वमप्यन्यथ सिद्धम्। मध्यम-वृद्ध वृत्तिदर्शनेन हि बालस्य व्युत्पत्तिर्भवति; न च र्यज्ञानेन विना मध्यमवृद्धप्रवृत्तिः; अतः प्रवृत्तिरूपलिङ्गदर्शनहेतु र्याव्यभिचारस्यान्यथ सिद्धेः न कार्यस्य सर्वपदसामर्थ्यविषयत्वम्। एवं च स ति 'देवदत्तो भुक्त्वा निर्गतः' त्येवमादिभिः र्यशून्यैरपि वाक्यैः लोके ीय ना

---

१. All except C omit रक
२. Ś : अयोगात्
३. C : कार्यत्वायोगात्
४. This is the reading in Ś; others read च तस्य
५. C : अनुगत
६. Ś : व भि रित ।
७. Ś : व भि र्थित्वं
८. Ś : पदार्थे
९. Ś : ज्ञायमाना
C : जाय ना

र्थप्रमि तिरुपपद्यते । न च ' र्यरहितस्थले थं व्युत्पत्तिः?' इति वाच्यम् ; निघ टुव्या रणोपदेशैरपि व्युत्पत्तिसंभवात् । तस्मात् र्य-नपेक्ष्यान्या न्वितस्वार्थं पदान्यभिदधति ।

XXVI (d). ननु अन्विताभिधानाङ्गीकारे गोशब्द आनयन-न्धनाद्यने तियोगि न्वयवत् स्वार्थमभिदध्यात्, अ नयनशब्दश्च गवाश्वाद्यने तियोगि न्वयवत् स्वार्थम् ; तथा च 'गामानय' ति क्यस्य र्थो व्यवस्थितो न स्यात् । इति चेत्, मैवम् । गोशब्दार्था-न्वयप्रतियोगिविशेषमानयशब्दो नियच्छति; तथ आनयशब्दार्थान्वय-तियोगिविशेषं गोपदम् ; इति पदद्वयबलात् व क्यार्थव्यवस्थासिद्धेः । नन्वेवमपि गोपदस्य आनयनसंसृ गोत्वमर्थः; आनयनपदस्यापि गोत्व-संसृष्टम यनम् ; इत्यर्थाधिक्य भावात् पदद्वयस्य पर्यायता स्यात्; न चै गोशब्देन नयनशब्देन च पूर्वापरीभाव दर्थभेद इति वाच्यम्, आ हिता-न्यग्न्य हि शब्दयोरप्यर्थभेद सङ्गात् । इति चेत्, मैवम् । न हि 'गां' इति पदम त्रात् आनयना न्वितत्वं गोः प्रतीयते; 'आनय' इति पदम त्रात् आनयनस्य गवान्वितत्वम्; किं तु पदद्वयेन परस्परान्वि-तत्वं तीयते; अतो नोक्तदोषः । [ननु[२] गोशब्दोच्चारणे कृते गवाकृति-रेव किमिति प्रतीयते न सामर्थ्याविषयीभूतं[३] सर्वमिति ? अव्यभिचारात् रभूयस्त्वात् गवाकृतेः, इतरेषां व्यभिचारात् इति ूमः ।] ननु गोशब्दे गोत्वेऽभिहिते तत्संसृ मानयनमितरेणाभिधीयते; तथा आनय-शब्देन आनयनेऽभिहिते तत्संसृ गोत्वं गोशब्देनाभिधीयते इत्यन्यो-न्य श्रयत्वम् । ति चेत्, नैष दोषः । तत्तत्पदश्रवणदशायां सो गोऽर्थः तीयते अन्त्यपदो रणानन्तरं च युगपत्सर्वपदानि स्मर्यमा-ण नि संभूय स्व र्थान् पूर्वमभिहितानेव अन्योन्यसंसृ तया प्रतिपाद-यन्ति । तथ च कुत तरेतराश्रयता ? तदुक्तं शालिकनाथेन

१. T, V read ननु & introduc this sentence after ति : lower down. C omits this entence.

२. Ś, C omit the words within brackets

३. Is it मर्थ्यवि यीभूतम् ?

पद्जातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसंपादितव्यक्ति पश्चाद्वा यार्थबोध म् ॥ इति ।

XXVI (h). न चैवं अभिहि न्वयवादात् अर्थादविशेष-
ङ्गः । अभिहितान्वयवादे हि पदानि पदार्थानभिधाय उपक्षीयन्ते, दार्थेभ्यो वाक्यार्थ तिपत्तिः । अन्विताभिधानवादे तु पदानामेव व यर्थ तिपादकत्व मिति विशेषः । तस्मादन्वि ाभिधानवादे दोषाभावात्, ' लितो द्रुमः' त्यादिकार्यशून्यवाक्यप्रयोगाणां च लोके भूयस पलंभात्, वेदेऽपि ' वषट् तुः थमभक्षः', ' तस्मात् पू । प्रपिष्टभागः' इत्य दिकार्यरहितवा यानामुपलंभात् अन्यैान्वितस्वार्थमात्रे शब्दसामर्थ्यं सिद्धम् । यद्यपि तेषु वेदवा येषु ' कर्तव्यः' इति पदमध्याह्रियते, तथापि वाक्य र्थ तिपत्तिसिद्धये दध्याहारः; अन्तरेणाप्यध्याहारं तत्प्रतिपत्तेः; किं अपू र्थिद्रव्यदेवत सम्बन्धावगमाधीनस्तदध्याह रः

XXVII. यत्तु द्धव्यवहारानुसारिणा सूत्रकारेणैव कार्यान्वितस्वार्थे[3] शब्द मर्थ्यं दर्शि म् ' दृभू ानां क्रियार्थेन स म्नायः'[4] इति, तत्र धर्मजि ासोपक्रमात् तोपयोगितया यार्थतां इत्यु तम्, न तु सिद्ध र्थे सामर्थ्याभावाभिप्रायेण । यतो भाष्यकारेणैव गुणगुण्यादीनां विशेषणविशेष्यादिभावेन समन्वयो दर्शितः । यदि जैमिनीयसूत्रं सिद्धार्थे शब्दसामर्थ्याभावपरं कल्प्येत तदानीं खण्डैकरसे ब्रह्मणि वेदान्तसमन्वयप्रतिपादक नि ादरायणसूत्राणि विरुध्येरन् ।

XXVIII. ननु ' सत्यं ज्ञानम् ' इत्यादिवेदान्तेषु प्रातिपदिर्थान मेकरस ह्मपरतया अन्वयेऽपि थमाविभ त्यर्थस्य कारकतया अन्वये सति थमखण्डैकरसत्वसिद्धिः? इ ति चेत्, नः पाणिनिना तिपादिकार्थमात्रे थमाविभक्तेः स्मरणात् । तत्र लिङ्गसंख्यादयस्त्व-

---

१. T, V : ादार्थादविशे ङ्गः
. C omits न्य
३. C : १ ार्थे ा
४. P M., I-i-7 (25)
६. Ś : क्रिया न इत्यु

ि ीयमान अपि ' ज्ञानघन एव ' इत्यादिश्रुतिविरोध त् अनिर्वच-
नीया भविष्यन्ति ।

XXIX. ननु थमान्त योगेषु अ स्तिक्रियाध्य ह रं त्य-
यनः स्म र; तथ च 'सत्यं ज्ञान नन्तं असि ' इत्यध्याह रे
अ ण्डत्वं भज्येत । इति चेत्, मैवम् । ' एते द्रुमाः फलिताः' 'अयं
पुरुषो र ज ीयः' इत्यादिप्रयोगेषु स बन्ध त्रपर्यवसायिषु अस्ति या-
ध्य ह रस्य उपयोगाभावात् यथा नाध्याह रः तथ अ ड र्थपर्यवस यिषु
वेदान्ते वप्यवगन्तव्यम् ।

XXX (a). किं च क्रियायामत्यन्तभक्तेनापि ' ब्रा णो न
हन्तव्यः' इत्यादिवाक्येषु भूतार्थे समन्वयो वक्तव्यः; क्रियायाश्चात्रासंभ-
त्, ननाभ वस्य क्रिय निवृत्तिलक्षणत्वात् । न च नि त्तेः
यात्वम्, औदासीन्यरूपत्व त् ।

XXX (b). अत्र भ र अ ह । न तावत् तिषेधवाचि
नञ्पदं णो सम्बध्यते, प्रत्यक्षस्य णस्य प्रतिषेधायोग त् ।
न पि धात्वर्थेन हननेन; हन्तृमनसि वृत्ततया हननस्याभावासंभवात् ।
नापि व्यप्रत्ययार्थेन फलप्रार्थनया त्तिहेतुना यबुद्ध्या वा; त्रिवि-
धस्य पि त्यक्षस्य प्रतिषेधानर्हत्वात् । अतो यथ ' नेक्षे ो न्तमादि-
त्यम् ' इत्यत्र ईक्षणविरोध्यनीक्षणसङ्कल्पक्रिया विधीयते, था अत्रापि
रागप्राप्तहनन विरोध्यहननसङ्कल्पक्रिय विधीयते इति ।

XXX (c). तदे द स रम्, नञ्पदस्याभावे ख्यत्वात् । न
च भ वान्तरमेवाभावः; तथा सत्यभावस्य तियोगिनिरपेक्षत्व सङ्ग त् ।
ननु दन्यतद्विरोधिनावपि नञ्पदस्य र्थौ; तदुक्तम्

ना धात्वर्थयोगी तु नैव नञ् तिषेधकः ।
वदत ऽब्र धर्मावन्य त्रविरोधिनौ ॥ इति ।

---

१. Ś : न्तुमनसि
२. Ślokavārtika, p. 575 (Sūtra V, v. 33.)
३. The printed text of the Ślokavartika reads
४. T, V : दस्य ह्मणा नौ

मैवम्; तत्र नञ्पदस्य ल क्षणिकत्व त्, अन्यथ अने र्थत्वस्य अन्या-त्ययस्य स त्। 'नेक्षेत' त्यत्र जापतिव्रत रणत्वात् द -सारेण लाक्षणिकोऽपि विध्यर्थोऽनु यव्रतलाभाय स्वीकृतः। न चात्र तथा ख्यमभावं परित्यज्य लाक्षणि र्थस्वी रे िञ्चित रण स्ति। न च हननाभाव एवानु य इति वाच्यम्, अन दे: गभावस्य तदयो-ग त्। अन्यथा विधिप्रतिषेधविभ गव्यवहारो लौवि को न सिध्येत्।

XXX (d). ननु नञ्पद र्थस्य ध त्वर्थेन न्वये सति हि हनन-प्रागभ वोऽत्रार्थो भ ति; न च तदन्वयः सुलभः, कृत्यर्थस्योप र्जन-त्वात्; अतः प्रधानेन प्रत्ययार्थे नञर्थस्यान्वयो वाच्यः। ति चेत्, एवमपि नञ्पदस्य नात्र तिषेधपरत्वमपैति। तव्य त्ययो हि विधिं ब्रूते। विधिर्नाम इष्टसाधनम्। श्व हननस्य यदि धनत्वं पामरदि-सिद्धं पुरुषस्य वर्त देव तव्य त्ययेनानूद्य तिषिध्यते ' णहन -मिष्टसाधनं न भवति' इति। न च प्रत्यक्ष स धनत्वमिति वाच्यम्; अदृष्टाविरोधिदृ योजनस्य शब्दार्थत्वात्, हननस्य चादृ विरोधि त्वात्। ननु इ वा अमुत्र वा अनर्थहीनः पुरु र्थः प ध्ये नास्ति; अतश्चादृ[2]विरोधिनोऽपी त्वमस ; ति चेत्, त्यमे त् वैत्र र्थोऽनर्थ-संयुक्त इति; तथाप्यर्था धि : पुरुषार्थः अनर्थाधि कोऽपुरुष र्थ ति तद्वि-भागः। तथा चानर्थाधिक्यादपुरुष र्थभूतं ब्र णहननं मुखतः तिषि-ध्यते। हननप्रवृत्तिहेतुभूतरागाद्युद्बोधनिमित्त ध्वंसोऽनु य ति अर्थात्प्रतीयते। न चार्थि कोऽर्थो विधातुं श यः, अशाब्दत्वात्, 'यश्च -र्थादर्थो न स चोदनार्थः' इति न्यायात्। अतो हननमि न भवति त्वनिष्टमित्येतावति शास्त्रेण बोधिते सति हननरागनिमित्तभूत इ त्वभ्र गो निरोद्धव्य इत्यन्वयव्यतिरेकाभ्यामेवावग यते।

XXX (e). नन्वेवमप्यत्र तव्यप्रत्ययेन अपूर्वाभिध नात् अनु-ष्ठानपरमेवैतद्वाक्यम्। इति चेत्, न; मानान्तराग येऽपूर्वे सम न्ध ह -

1. S: अन्याख्यात्
2. S: विरोधिनः
3. C: वे एवा र्गो

भावात् आगमादेवापूर्वमवग य तत्र स न्धग्रहणे बकबन्ध य सः स्य त् । क्षणि स्य यागस्य श्रुतस्वर्गसाधनत्वानुपपत्त्या तदवगतिरिति चेत्, ह्यपूर्वमशब्दार्थः स्यात्; 'अनन्यलभ्यः शब्दार्थः' इति नियमात् । अन्यथ शरीरेन्द्रियविषयसम्बन्धमन्तरेण स्वर्गासिद्धय शरीरादीनामपि प्रत्ययर्थत्वं सज्येत । देवं ' र्यान्वितस्व र्थ एव शब्दसामर्थ्यम्' इत्यभिनिविशमाने ापि वाक्यानां भूतार्थस न्वयस्याभ्युपेयत्वे िमपर द्धं वेदान्तैः?

XXXI (a). न च वेदान्तैरवगतेऽपि ब्रह्मणि विधिमन्तरेण फलाभाव इति शङ्कनीयम्; तर ावगमेनाविद्यायां निवर्तित यां तत्कृतशरीरादिस न्धनिवृत्तेः फलत्वात् ।

XXXI (b). मकृतः शरीरसम्बन्धो नाविद्याकृत इति चेत्, वि ात्मनः म र ाभावि वा शरीरकृतम्? नाद्यः, चैतन्यस्य क्रियारहितत्वात् । न द्वितीयः, कर्मशरीरयोरन्योन्य श्रयत्व ङ्ग त् शरीरव्यक्ती ां वाह ीकारात् नान्योन्याश्रयं इति चेत्, न्धपरम्परा सज्येत । बीजाङ्कुरादिवदविरोध ति चेत्, एवमपि त्रादिसम्बन्धवत् शरीरसम न्धस्य क मात्रनिमित्तत्वे पुत्राद विव शरीरेऽपि अहमभि ानस्य गौणत्वं सज्येत; न तद्युक्तम्, सिंहदेवदत्तयोरिव शरीरात्मनोः सिद्धभेदाभावात्; अन्यथा पुत्रादिशरीरेणेव स्वशरीरेणापि ातृत्वाभा सङ्गात् । तर ान्न मनिमित्तः शरीरादिस बन्धः, विं त्वविद्याकृतः । स च तत्त्वज्ञ ननिवर्त्यः । अत एव ुतिः तत्त्वदर्शिनो यथापूर्वं संसारित्वं व्यावर्तयति 'सचक्षुरचक्षुरिव स र्णोऽ र्ण व' इत्यादि ा ।

XXXII (a). तर्हि तत्त्वज्ञाने ति सद्यः शरीरपातः स्यात्; इति चेत्, न; ' स्य तावदेव चिरं या विमोक्ष्येऽथ संपत्स्ये'[५]

---

१. Ś : तव्य ा ं ं
· Ś, C : नि षे ा ानां
३. C : निवृत्त ां
४. Ś, C : न्योन्या यतेति चेत्
५. Chānd., VI- iv-2

ति श्रुत्य रब्ध शे ि पर्यन्तमवस्थ त् । 'क्षीयन्ते चास्य र्माणि' ति ुतिर न रब्धकर्मविषया, पवादविषयं परित्यज्य सामान्यं र्तते ति न्य य त् यद्यपि त्त्वज्ञान शेषकर्मो - दानभूतामविद्यां निवर्तयति, तथ पि रब्धकर्मणो न निवर्तकम्, स्वयं त्फलत्वात् । तदुक्तम चार्यैः

आरब्धस्य ले ह्येते भोगो नं च र्मणः
अविरोधस्तयोर्युक्तो वैध र्यं चे रस्य । ति ।

न चैवं जीवन् क्तस्यात्र यानुभवद्वैतदर्शनयोः विरुद्धयोः हित्यं - ज्येत ति मन्तव्यम्। न हि यं योर्यौगपद्यं ब्रूः, विं र्यायेणोद्भवाभिभवौ । न च शरीरप त्पूर्वमपरोक्षं तत्त नमेव नास्ति, व्यासादीनां सशरीराण मेव तत्त्वदर्शनस्य राणे व त्

XXXII (b). न त्त्वदर्शिनोऽपि य दाचित् दर्शे ज्योति ष्टो दि र्मा नमपि स्यात् । ति चेत्, न; अ य प्रतिनियतदे ल धिकारकर्तृप्रतिपत्त्यधीनत्वात्; तत्त्वदर्शिनस्तु आरब्धर्मनिमित्तदोषोद्भवस्य दे नियम वे रब्ध प्तिपर्यन्तमवस्थान योगात् । यथासंभवमनुष्ठ नमि ति चेत्, ; [3]नस्तत्त्वदर्शनेन अनु त र्मणां ब धे सति अनु न योजनाभावात् । प्रत्यह प- चीयम नदुरितनि त्तिः योजनमिति चेत्, न; ानिन आगामि रित - दिंस बन्धासंभवात्; संभवे वा दैनन्दिनतत्त्वदर्शनेनैव तन्निवृत्तेः;

अपि चेदसि पापेभ्यः सर्वेभ्यः प पकृत्तमः ।
वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ।

इतिं स्मृतेः ।[5]

XXXII (c). तत्त्वदर्शिनः श नियमाभ वे यथे चरणं स्यात् । इति चेत्, न; अ चरणस्य हित हितप्राप्तिपरिह रप्र र्थ निमित्त-

१. Muṇḍ., II-ii-8
२. C omits मन्व्यम्
३. Ś, C : पुनः पुनः
४. C omits आदि
५. Gīt-, IV-36

त्वात्; जीवन्मुक्तस्य स्वात्मन्येव निरतिशयानन्दमशेषानर्थनि त्तिं च दनुभव : साध्यपुरु ार्थप्रार्थनाभावात् आचरणमेव नास्ति; तो यथेष्टाचरणप्रसङ्गः? भिक्षाटनादि त्तिस्तु आरब्ध र्मदोषमूला। न च तद्वत् यपापे अप्यारब्ध र्मणा वर्तेयातां इति वाच्यम्; आरब्धकर्मणः लम त्रहेतुत्वात्; पुण्यपापयोः पुनः निमित्तमविद्य रागादि; तच्च तत्त्व- नेन निवर्तितम्। न च मनननिदिध्यासनयोः प्रतिबन्दी ह्या; तयो- रपि श्रवणवदुपायत्वेन तत्त्वदर्शनात ागेवानुष्ठेयत्वात्।

XXXIII. ननु भेदाभेदयोरुभयोरपि[2] वास्तवत्वात् नाद्वैतद- र्शनेन द्वैतदर्शनं ब ध्यते, येन कर्मप्रवृत्तिर्न संभवेत्; न च पूर्वपक्षसिद्ध - न्तादिनियमस्य भेदाभेदवादिना वक्तुमशक्यत्व त् सर्वसाङ्कर्यमिति शङ्क- नीयम्; अद्वैतवादेऽपि समानत ात्। मैवम्; अद्वैतवादे मायाकल्पितस्य श्वस्य यथादर्शनमेव भेदेन व्यवस्थितत्वात्। ब्र ण एव अद्विती- यत्वात्। त्वन्मते तु ङ्कर्यं दुष्परिहरम्। न च व्यवहारसाङ्कर्येऽप्यदुष्टो मोक्ष ति वाच्यम्; त्त्वदर्शनेन प्रप ानि त्तौ देह त्मभावसुखदुःख देर- प्य धादनिर्मोक्षप्रसङ्गात्। संस रदशायामेव भेद भेदौ देहात्मभाव - दिश्च इ चेत्, तथापि भेद भेदयोः परस्परविरोधः कथं परिह्रियेत? माणिकत्व दविरोध इति चेत्, न। िं 'खण्डो गौः' इति प्रत्यक्ष ानमेकमेव त्र प्रमाणम्, किं वा ' ण्डो गौः' इत्यनेन द्वि ीयेन ज्ञानेन[3] सहितम्, अथ वा 'स एवायं गौः' इति तृतीय- ज्ञानसहितम्? नाद्यः, 'खण्डो गौः' इत्यस्मिन् प्रत्यये भि ोऽभिन्नश्च इति तिभासाभावात्। भेदाभेदशब्दोल्लेखाभावेऽपि तत्प्रतीतिरस्त्येव[4], ति चेत्, न; परस्परोपमर्दरूपयोः तयोः सह तिभासायोगात्। अथ ज तिव्य त्योर्भेदः त वदभ्युपेयत एव; इतरेतरात्मत्वादभेदोऽप्यभ्युपे- यते[5]। इति चेत्, न; भिन्नयोरितरे रात्मत्वे सं तिपन्नदृ ान्ताभावात्। न द्वितीयः; 'खण्डो गौः, ण्डो गौः' इत्यनयोर्ज्ञानयोः संभूय प्रमा-

---

१. C : तैं ं

२. C omits उभ

३. O ly Ś and C insert द्वि ीयेन ज्ञानेन

४. Ś omits ए

५. Ś : ॅ पे ;

त्वाभ वात् अथ पि[2] थम नेन य स्मिन् गोत्वे ख ड त्म त्वं गृहीतं तस्मिन्नेव गोत्वे द्वितीयज्ञानेन खण्डत्वं निराकृत्य मु॰ त्वे गृहीते अर्थाद्भेदाभेद सि द्धिः । इति चेत्, न; 'स एवायं गौः' इति त्य-भिज्ञ नमन्तरेणैकस्य गोत्वस्य उभयस बन्धासिद्धेः । न तृतीयः, त्यय-त्रैयस्यै[3] स्मिन्नर्थे प्राम य योगात् । न च प्रत्ययत्रयान्यथ नुपपत्तिः म णम्; 'ह्रस्वोऽ रो दीर्घोऽ रः स एवायम रः' इति प्रत्यय-त्रयस्य भेद भेद वन्तरेर्ण औपाधिकह्रस्वदीर्घत्वोपजीवनेन प्युपपत्तेः ।

XXXIV. नन्वेवं भेदाभेदयोरसंभवेऽप्य त नि तै स्य म्; तिँ चेत्, न, तत्र भेदासिद्धेः । विवादगोचरापन्नाः स्थावरजङ्गम-शरीरव्यक्तयः प्रतिव दिशरीरव्यक्त्यात्मनैव आत्मवत्यः, शरीरव्यक्ति-त्वात्, तिवादिशरीरव्यक्तिवत्, त्यैकत्व नुम न त् । अथात्म नो भिन्नाः, युगपज्जननमरणादिविरुद्धध श्रियत्वात्, अग्न्युदकादिवत् । इति चेत्, न; जनन दीनां शरीर श्रयत्वेन हेत्वसिद्धेः[6] । न चात्मैकत्वे सुखदुःख दिसाङ्कर्यप्रसङ्गः; प्रतिबि बेषु सत्यप्ये त्वे वर्णसाङ्कर्यादर्शन अन्योन्यवृत्तान्त ननुसन्ध नमपि रीरभेदादेवोपप ते, एकस्य प्यात्म-नोऽतीतशरीरादिष्वनुसन्धानादर्शन त् । न च जीवानां अन्योन्यभेदाभा-वेऽपि जीवब्र णोः भेदः स्यादिति मन्तव्यम् । न त वदत्र प्रत्यक्षं क्रमते, जीवब्रह्मणोरतीन्द्रियत्वात् । न पि विरुद्धधर्माश्रयत्वहेतुन साधयितुं शक्यः; बि बप्रतिबि बयोरनैक न्ति त्वात् । न पि नियन्तृ नियन्त-यादि श्रौतलिङ्गं भेदे मानम्, 'नान्योतोऽस्ति द्र , नान्योऽतोऽस्ति श्रोता'[7] इत्यादिसाक्षाद्भेदनिषेधश्रुत्य[8] लिङ्गस्य ब धात् । न पि 'द्व सुपर्णा'[9] इति श्रुत्या भेदसिद्धिः, 'स यश्चायं पुरुषे, यश्च सावादित्ये, स एकः'[10] इत्याद्येकत्वप्रतिप दकश्रुतिविरोध त्; भ्रान्ति सिद्धद्वैतानुवा-

१. Ś : मापक्षत्वाभावात्
२. C omits अपि
३. C, T, V : द्वयस्य
४. C inserts एव
५. C : स्तां इति
६. T : हेतुर सिद्धेः
७. Bṛh., III-vii-23
८. T, V : द्वि ति भिस्तर धात्
९. Śvet., IV-6
१०. Taitt., II-viii

देन पि द्वित श्रुत्युपपत्तेः स्म भेद भेदौ इति अद्वैतदर्शनेन द्वैतदर्शनस्य ब धः सिद्धः

XXXV. ततश्च स क्षात्क रम त्रेण फलसि द्धेः न वेदान्तेषु विधिगन्धोऽपि शङ्कनीयः। यदि स्य त्, तर्ह्येकैव षोड लक्षणी ध - मीमांस प्रसज्ये । तथ च 'अथातो ह्मजिज्ञा ' इति पृथ रंभो नोपपद्येत। शरीरेन्द्रियसाध्य विधिभेदाः पूर्वमीमांसायां निरूपि ः; ह तु नसस ध्यो विधिर्निरूपिते इति पृथगारंभः। ति चेत्, तर्हि 'अथ तः परिशि ध जिज्ञ ' इत्येव रभ्येत; न त्वेवम रभ्यते। तस्त् धर्मब्र भेदादेव नयोर्मी यो दः। तदेवं विधिशङ्काया अप्यभ वात् निर्विघ्नो ब्र णि वेदान्तसमन्वय इति अशेष तिमङ्गलम्।

संगृहीतं विवरणं सहाने निबन्धनैः।
टी ऽयासं विन लो ः क्रीडन्त्वत्र यथ सुखम्॥

हर्ता हृदयं षोढुमश तोऽप्यति भक्ति ः।
अ र्षं न्थमेतेन काशात ीदतु॥

यद्विद्य तीर्थगुरवे शुश्रूषान्य न रोचते तस्मात्।
अस्त्वेषा भक्तियुत श्रीविद्यातीर्थपादयोः सेवा॥

इति नवमवर्णकम्

चतुर्थसूत्रं समाप्तम्।

समाप्त विवर मेयसङ्ग्रहः॥

शुभं भूयात्

---

१. All e cept Ś a d C read २. Ś: निरूप्य इति विना in plac of ति

# शुद्धिपत्रम्

| age | Line | For | Read |
|---|---|---|---|
| 9 | 19 | साधनस्यो | साधनत्वस्यो |
| 11 | 2 | प्रत । | प्रतीत्य। |
| 14 | 12 | कायर्स्य | कार्यस्य |
| 21 | 8 | धर्माधिकं | धर्मादिकं |
| 34 | 15 | उताभेद | उताभेदा |
| 40 | 5 | वास्तवता | वास्तव |
| 41 | 8 | पुनर्बीजा | पूर्वबीजा |
| 41 | 13 | उ | उत |
| 55 | 9 | न्यत | न्य |
| 88 | 13 | तन्यस्यान्तः | तन्यान्तः |
| 89 | 13 | वस्थस्या | वस्थि । |
| 107 | 3 | दावाव | दा |
| 122 | 14 | श्रवणत्वात् | श्रवणात् |
| 128 | 14 | निधिध्या | निदिध्या |
| 138 | 20 | मासव्याख्या | मासाख्या |
| 158 | 21 | र्थता | र्थतया |
| 159 | 16 | योगोर्थऽवि | योगोऽर्थवि |
| 163 | 4 | योऽध्येत | योऽध्येत |
| 177 | 1 | द्वितीय | तृतीय |
| 178 | 7 | सामर्थ्ये | सामर्थ्ये |
| 178 | 15 | ध्नायय | नाध्यय |
| 179 | 1 | द्वितीय | तृतीय |
| 181 | 1 | द्वितीय | तृतीय |
| 183 | 1 | द्वितीय | तृतीय |
| 183 | 10 | हितात्वात् | हितत्वात् |

| Page | Line | For | Read |
|---|---|---|---|
| 186 | 3 | ि ना | दङ्गिनो |
| 1 7 | 16 | योज्ये | प्रसज्ये |
| 189 | 17 | रि रयर्थ | रि बर्थ |
| 191 | 2 | मः | कम् |
| 193 | 11 | यजेत् | यजेत |
| 208 | 19 | व्य स्था | व्य स्थां |
| 214 | 13 | मनु ान | मननु ान |
| 214 | 16 | प्रयोज्य | प्रयोज्यत्व |
| 235 | 14 | पत्तो | प गौ |
| 235 | 15 | गुणा | ण |
| 244 | 20 | तन्यम् | तव्यम् |
| 256 | 15 | स्रष्टर ात् | स्रष्ट्टर ात् |
| 270 | 23 | नारि | नारिष्ठ |
| 281 | 12 | तन्त्रोपा | तन्त्रगोपा |
| 295 | 21 | स्वार्थ | स्वार्था |
| 317 | 22 | र्ति ब्र | र्तिब्र |
| 319 | 4 | धर्मानतु | धर्मावनतु |
| 321 | 23 | यत्नान्त | यत्नानान्त |
| 334 | 25 | वदता | वदतो |

| | | | |
|---|---|---|---|
| ix | 28 | *Sarvadarśana* | *Sarvadarśana-saṅgraha* |
| ix | 30 | this | the relevant |
| xi | 15 | slokas | ślokas |
| xii | 32 | Vākyasudhāṭīkā | *Vākyasudhāṭīkā* |